धनदः साधकजातः प्राणहरस्तस्य नैधनोद्भूतः ।
सन्मानदानफलदः स्वमैत्रजः परममैत्रजातश्च ॥ १४ ॥

सम्पत्प्रदः सुफलदस्त्रिपञ्चसप्तर्क्षजातको विफलः ।
वैनाशिकसंजातो विनाशकृत् तस्य विज्ञेयः ॥ १५ ॥

ऋक्षं सैकर्मदशमं गर्भाधानं च विंशतिः प्रोक्तम् ।
द्वाविंश नक्षत्रं वैनाशिकमाहुराचार्याः ॥ १६ ॥

अश्वियमानलविधिशशिरुद्रादितिगुरुभुजङ्गपितृयोन्यः ।
अर्यमभगदिनकृत्त्वष्टानिलशक्राग्निमित्रेन्द्राः ॥ १७ ॥

निर्ऋतिजलविश्वहरिवसुवरुणाजैकपादहिर्बुध्न्याः ।
अश्विन्याद्यधिपतयो भवन्ति पूषा तु रेवत्याः ॥ १८ ॥

मूलविशाखाज्येष्ठामखाधनिष्ठाभिवरुणदैवानि ।
चित्रा च राक्षसांशास्ताराः क्रूरास्तु विज्ञेयाः ॥ १९ ॥

पुष्यपुनर्वसुहस्तस्वात्यनुराधाश्विनीमृगश्रवणाः ।
रेवत्या नव ताराः प्रोक्ता विबुधांशकाः सौम्याः ॥ २० ॥

प्रोष्ठपदं भाद्रपदं भरणी रौद्रं च रोहिणी विश्वम् ।
अर्यमभगाम्बुजाताः प्रोक्तास्तारा मनुष्यांशाः ॥ २१ ॥

प्रीतिकराः स्युः स्वगणा मानुषदेवांशयोश्च मित्रत्वम् ।
वैरं सुरराक्षसयो राक्षसवध्यो मनुष्यांशः ॥ २२ ॥

पुष्यानलयोश्छागो योनिः स्यात् सौम्यरोहिणो सर्पः ।
मूलार्द्रयोर्मृगारिर्मखाधनिष्ठाखुराख्यातः ॥ २३ ॥

---

१. 'त्रश्च' ख. ग. घ. पाठः. २. 'सम्पदद', ३. 'क्ताः', ४. 'ध्न्यः' ख. ग. पाठः. ५. 'सर्पानि' ग. पाठः. ६. 'नि' ख. पाठः.

आश्लेषपुनर्वस्वोर्मार्जारो दुर्जयो महाक्रूरः ।
त्वाष्ट्रेन्द्राग्न्योर्व्याघ्रः पशुर्भवेदम्बुभगयोश्च ॥ २४ ॥
मैत्रेन्द्रयोर्मृगाख्यो हस्तस्वात्योस्तुरङ्गवैरी स्यात् ।
वरुणाश्विनी तुरङ्गः कपिः श्रवणवैश्वदेवयोर्जातः ॥ २५ ॥
भरणीपौष्णद्विरदौ भाद्रपदार्यमृगाधिपो ज्ञेयः ।
अभिजित् प्राग्भाद्रपदं प्रभवो बभ्रुः समाख्यातः ॥२६ ॥
छागः फणी मृगारिः पलितविलालश्च पुण्डरीकश्च ।
पशुवृषमहिषतुरङ्गमकपिगजकेसरिबभ्रवः प्रोक्ताः॥ २७ ॥
नक्षत्रबलं[1] प्रोक्तं चतुर्दशविधं स्फुटं समासेन ।
यो यस्मादधिकबलं[2] तं तेनैव प्रयुञ्जीत ॥ २८ ॥
गोव्याघ्रयोर्विरुद्धं नकुलेन फणी द्विपारिणा हस्ती ।
छागेन ग्राममृगः कृतो विलालेन पलिताख्यः ॥ २९ ॥
मृगमर्कटयोर्युद्धं विवर्जयेदाहवे ततो नित्यम् ।
महिषतुरङ्गमकलहः प्रदूषितो युद्धशास्त्रज्ञैः ॥ ३० ॥
द्वादश ताः कुलताराः स्थायिन्यो मासनामसम्भूताः ।
यायिन्यो द्वादश ताश्चरस्थिराख्याश्चतस्रश्च ॥ ३१ ॥

चित्रा विशाखा श्रवणं च शाक्रं
पुष्यं मघाभद्रपदाग्निजातम् ।
सौम्याश्विनी विश्वजफाल्गुनाख्यं
कुलानि च द्वादशमासजानि ॥ ३२ ॥

हस्तानुराधायमजैकपादं
स्वात्यम्बुजं फाल्गुनवारुणाख्यम् ।

---

१. 'हान् क्रू' क. ख. पाठः २., ३. 'फ' ग. पाठः.

ब्राह्मं सनागादितिजं सपौष्णं

द्विषत्प्रभेदान्यकुलानि भानि ॥ ३३ ॥

निर्ऋतिवसुजरौद्रराक्षसानि

स्थितचरितानि कुलाकुलानि भानि ।

प्रथममपि कुलोडुभिः प्रवेश-

स्तदकुलभे रणभूतलं च पश्चात् ॥ ३४ ॥

इति सङ्ग्रामविजयोदये नक्षत्रविधानो नाम

षष्ठोऽध्यायः ॥

---

अथ सप्तमोऽध्यायः ।

अमृतान्यक्षरमरणव्या[2]धिक्षयदिव्यसिद्धिवैराणाम् ।

विषनागपुष्कराणां विचित्रयोगांश्च वक्ष्यामि ॥ १ ॥

आदित्यमूलं श्रवणं शशाङ्के

धरासुते भाद्रपदो[3] बुधेऽग्निजम् ।

मन्दे मरुद्भं भृगुभाग्ययुक्तं

पुनर्वसू मन्त्रिणि दिव्ययोगाः ॥ २ ॥

सावित्रमर्के शशिसौम्ययुक्ते

कुजाश्विनी चेन्दुसुता[4]नुराधा ।

पुष्यं गुरौ भार्गवपौष्णयुक्तं

स्यात् सिद्धयोगा रविजेन्दुपत्नी ॥ ३ ॥

कुलर्क्षसंस्थः कलहं[5] शशाङ्कः

करोति तत्स्वामिजयप्रदः स्यात् ।

---

१. 'दस्य कु' ख. पाठः. २. 'गा' ग. पाठः. ३. 'दं' ख. पाठः ४. 'ते' ग. पाठः ५. 'हं मृगाङ्कः' ग., 'हं महाङ्क क' ख. पाठः.

कुलाकुलस्थो हिमगुश्च सिद्धिं
कुलेतरस्थो यदि यायिसिद्धिम् ॥ ४ ॥
सूर्यानुराधा शशिविश्वभाख्यं
भौमे शताख्यं च बुधेऽश्विनी स्यात् ।
देवाप्तसौम्यो भृगुजाहिभं च
संहारयोगो रविपुत्रहस्तः ॥ ५ ॥
भानोर्विशाखा शशिवारिभं च
भौमे धनिष्ठा बुधपौष्णयोगः ।
शुक्रे च पुष्यं गुरुरोहिणी स्या-
न्मन्दोत्तरा च क्षतयोग एवम् ॥ ६ ॥
ज्येष्ठा दिनेशे त्वभिजिच्छशाङ्के
भौमे[1]ऽजपादेव बुधे च याम्यम् ।
आर्द्रा गुरौ शुक्रमखा समेता
चित्रासिते स्याद् यदि नाशयोगः ॥ ७ ॥
रवौ मखा शीतकरे विशाखा धरासुतार्द्रा[2] बुधराक्षसे च ।
गुरौ शताख्या भृगुरोहिणी च स मृत्युयोगो यमवैश्वदेवः ॥
सूर्येऽग्नियाम्ये गुरुभं शशाङ्के
मखोरगौ भूमिसुते बुधे च ।
चित्रा विशाखा गुरुसौम्ययुक्ते
शुक्रे गुरुभं कमलोद्भवर्क्षम् ॥ ९ ॥
मन्दे शताख्यं श्रवणेन युक्तं
शुभे विनिन्द्यो यमखण्डयोगः ।

१. 'मो' क. पाठः. २. 'र्द्राम्बु च राक्ष' ख. पाठः.

शत्रुक्षयं व्याधिहरं च कुर्यात्
तत्काललवेलापरिबोधितं च ॥ १० ॥

गुर्वार्क्यंशकतारके सुरगुरोर्वारेऽथवार्के दिने
तस्मिंस्तद्दिनपांशके तदुदये रिक्तान्विते च[1] क्षितौ[2] ।
कुर्याद् रुग्रणवैरिणां च महतां नाशाय तत्तत्क्रियां
तेषां भेषजहेम[3]दानदहनच्छेदादिभिर्मानवः ॥ ११ ॥

आदित्यानलपञ्चमी रविसुते पौष्णाष्टमीसंयुते
प्राग्ज्येष्ठा च गुरौ सिते श्रवणकं षष्ठया समालिङ्गितम् ।
सप्तम्यां भरणी बुधे हिमकरे चित्रा द्वितीयान्विता
भौमे ब्रह्मभपौर्णिमा प्रहनने योगो विषस्य ध्रुवः ॥ १२॥

ऐन्द्राग्निहस्तश्रवणानुराधायमर्क्षपादान्तिमके धरायाः[4] ।
धनुःकुलीरालिषु[5] यन्मृदं[6] चेद् गृह्णाति शत्रून्न वदेद् विवादे ॥

रिक्तायां विषविष्ट्योः[7] (पर्व)णि सूर्यात्मजस्य वारेऽस्मिन् ।
वापीकूपतटाकसरसां मलदाहनं कुर्यात् ॥ १४ ॥

मैत्र्यंशकयोगे[8] मैत्रमुहूर्ते च चन्द्रवेलायाम् ।
रणदानाद्[9] वा दानाद् रिपुरपि च तदा भवेन्मित्रम् ॥

अनिलानलवरुणफणिहरर्क्षरक्षोभपौष्णचित्रायाम् ।
यद्येवं रविकुजयोर्वरयोगो नन्दया युक्तः ॥ १६ ॥

१. 'वीक्षिते ।' क. घ. पाठः. २. 'तेः', ३. 'हो', ४. 'याम्' ग. पाठः ५. 'ग्नि' ख. पाठः ६. 'गं' क., 'तं' ग. पाठः. . ७. ष्ट्योः (पौ)र्णे सू', ८. 'त्रे द्यं' क., 'त्राग्न्यंश' ग. पाठः. ९. 'ऋणनाशोऽप्यल्पदानाद रिपु' ग., 'ऋणनाशोऽल्प ........ पु' ख. पाठः.

अन्त्येऽमावास्यायां त्रिनाडिकात्र्यंशके भुजङ्गर्क्षे ।
सार्धमुहूर्तसमेतः सनागकरणः स योगः स्यात् ॥ १७ ॥

शालीक्षुमाषयवतिलमुद्गश्रीपञ्चगव्यसहितानि ।
भूमौ धाम्नि खनित्वा क्षिपेत् ससर्पे[1] तु नागाख्ये ॥

इति सङ्ग्रामविजयोदये योगविधानो नाम
सप्तमोऽध्यायः ।

## अथाष्टमोऽध्यायः ।

अथ पक्षिचक्रमेतद् वक्ष्यामि तदष्टवर्गसम्भूतम् ।
अष्टग्रहाधि[2]दैवं दिक्पालैरन्वितं सारम् ॥ १ ॥

अष्टोरगाष्टभैरवविष्टयष्टकदेवताष्टकोपेतम् ।
सुरयोन्यष्टकयुक्तं शुभाशुभोद्दीपनं[3] जगताम् ॥ २ ॥

गृध्रोलूकश्येना पिङ्गलिका कौशिकश्च सरसिभवः ।
विषभुग् गोवत्सोऽष्टौ पतत्रिणश्चाष्टवर्गेशाः ॥ ३ ॥

प्रागुत्तराग्निराक्षसयमवरुणसमीररुद्रनिलयस्थाः ।
रविचन्द्रभौमबुधगुरुशुक्रार्कजराहुभिर्युक्ताः ॥ ४ ॥

पिङ्गलिकायाः श्येनः श्येनाद् विषभुक् स कौशिकस्तस्मात् ।
कौशिकतः सरसिभवस्तै[4]दुलूकस्तस्य गोवत्सः ॥ ५ ॥

काकारिः पिङ्गलिका माघे बलिनौ वसन्तसमयेऽपि ।
सारसशिखिनौ बलिनौ भाद्रपदे कौशिकश्येनौ ॥ ६ ॥

1. 'ज्यें', 2. 'ष्ट' क. पाठः. 3. 'कं' ग. पाठः. 4. 'स्तलूक' ख. पाठः.

गोवत्सगृध्रविहगौ बलिनौ चैत्रेऽपि युद्धदुःसाध्यौ ।
इत्येवं मासबलं ज्ञात्वा तु पतत्रिणां क्रमशः ॥ ७ ॥
निशि पिङ्गलिकोलूकौ दिनशेषे श्येनपक्षिणौ बलिनौ ।
प्रथमे सारसशिखिनौ मध्याह्ने कौशिकः कृष्णः ॥ ८ ॥
तत्तद्वेलायां च प्रबलाः सर्वे पतत्रिणः समरे ।
वेलाबलमाख्यातं सङ्ग्रामजयोदये सम्यक् ॥ ९ ॥
गृध्रो बलवान् ज्ञेयः प्रथमनवम्योश्च रुद्रहुङ्कारः ।
दशमीद्वितीययोरपि दुस्साध्यः सर्वजन्तूनाम् ॥ १० ॥
एकादश्यां श्येनस्तृतीयादिवसे महाबलोपेतः ।
वैष्णव्यां च चतुर्थ्यां स पिङ्गलो दुर्जयः प्रोक्तः ॥ ११ ॥
पञ्चम्यां मदनतिथौ सङ्ग्रामे कौशिकः खगो भुङ्क्ते ।
षष्ठ्यां च चतुर्दश्यां सरसिभवः शत्रुदुस्साध्यः ॥ १२ ॥
सप्तम्यां पूर्णतिथौ विषभुग् बलवान् महारणे विजितः ।
अष्टम्यां गोवत्सः स जयेच्छत्रून् समस्तांश्च ॥ १३ ॥
एवं क्रमेण विहगाश्चरन्ति मासस्य पक्षयोरुभयोः ।
सूर्यादिग्रहयुक्तास्तिथिवारैः स्वाश्रमासोनाः ॥ १४ ॥
यो भुङ्क्ते भवति बली यो मृतको युद्धभङ्गमाप्नोति ।
तेषां तिस्रो नाड्यस्त्रयश्च पादाः रञ्जतः काले ॥ १५ ॥
पुनरन्यममरचक्रं वक्ष्येऽहं युद्धशास्त्रतः सारम् ।
लाभालाभजयाजयजीवितमृतदीपनं सकलम् ॥ १६ ॥

---

१. 'पक्षिणां', २. 'भुक् प्रबलो र' ख. पाठः. ३. 'सेषु प' क. पाठः. ४. 'यमृतजीवितदी' ग. पाठः.

सुरदैत्यनागकिन्नरमुनिवररक्षःपिशाचमनुजास्ते ।
अकचटतपयशनाथाः पूर्वाद्याः पार्थिवे चक्रे ॥ १७ ॥
देवेभ्यो दैत्याः स्युर्दैत्येभ्यः पन्नगाश्च तद्बलिनः ।
गन्धर्वास्तेन्मुनयस्तेभ्यस्ते राक्षसा बलिनः ॥ १८ ॥
तेभ्यो दृढाः पिशाचास्तच्छ्रेष्ठा मानवाः समाख्याताः ।
उत्तममध्यममन्यत् सत्त्वगुणास्ते च पूर्वाद्याः ॥ १९ ॥
राक्षसपिशाचपन्नगदैत्याः सन्ध्यावसानसमये च ।
दिवसे च देवमुनयो मनुजाः सत्त्वाधिकाः समरे ॥२०॥
अथ वर्णचक्रमेतत् स्थानबलाधीशकालसंयुक्तम् ।
संक्षेपाद् वक्ष्येऽहं पुंसां सङ्ग्रामविजयाय ॥ २१ ॥
प्रथमादिर्ङकारान्ताः प्रथमांशे देवतालये बलिनः ।
चादिर्णकारान्तास्ते नृपोद्भवाः शत्रुसङ्कीर्णे ॥ २२ ॥
तादिमकारान्तास्ते नगरे बलिनो वणिक्समुद्भूताः ।
यादिहकारान्तास्ते शूद्रा गिरिगह्वरे बलिनः ॥ २३ ॥
अथ सकलचक्रसारं सकलेश्वरनिर्मितं परं पूर्वम् ।
यायिस्थायिबलाबलसन्दीपं सर्वलोकेषु ॥ २४ ॥
खगपतिविलाळसिंहग्राममृगव्याळमूषिकेभमृगाः ।
अकचटतपयशवर्गाः स्वांशाधीशाश्च पूर्वाद्याः ॥ २५ ॥
स्वस्थाने बलवन्तः परधाम्नि भवन्ति हीनवीर्यास्ते ।
परिघाक्रान्तस्थानात् पूर्वान्तास्ते म्रियन्ते च ॥ २६ ॥

---

१. 'स्युस्तदन्ये प', २. 'स्तु समुनय', ३. 'न्ध्योपासनसमये तु ।', ४. 'द' ग. पाठः. ५. 'ङ', ६. 'म्नि न भ' ख. पाठः.

सर्पस्य खगः परिघो मार्जारो मूषिकस्य परिघोऽयम् ।
सिंहो गजस्य परिघो मेषस्य श्वा भवेत् परिघः ॥ २७ ॥
खगपोरगयोर्वैरं मूषिकमार्जारयोश्च शत्रुत्वम् ।
सिंहगजयोश्च वैरं मण्डलमृगयोर्महावैरम् ॥ २८ ॥
खगपतिविलाळसिंहग्राममृगाः शत्रुयायिनो बालिनः ।
सर्पाखुहस्तिहरिणा[1]श्चत्वारः स्थायिनः समरे ॥ २९ ॥
स्थाननृपभृत्यवनितासहायगुरुबन्धुवाहनाद्याश्च ।
वश्याः स्व[2]वर्गजाताः प्राणहराः शत्रुवर्गस्थाः ॥ ३० ॥
वश्यांशा ये च नराः स्नेहकरास्ते धनप्रदाश्चापि ।
वधकांशाः प्राणहराः स्त्रीनृपभृत्याः सहायाश्च ॥ ३१ ॥
गरुडा[3]द् बली विलाळस्तस्मात् सिंहस्ततो नखी बलवान् ।
नखिनः फणी तदाखुर्बलवान् द्विरदस्ततो मेषः ॥ ३२ ॥
ये दीर्घ[4]कैलावन्तस्ते जयिनः स्थायिनोऽपि सङ्ग्रामे ।
ये ह्र[5]स्वकैलोपेता नहि जयिनो यायिनोऽपि नराः ॥ ३३ ॥
स्वांशे[6]ऽरिमित्रभेदं जानीयात् पञ्चभिः स्वरैस्तत्र ।
बालकुमारस्वामिस्थविरमृतानु[7]क्रमेणैव ॥ ३४ ॥
अथ पुनरन्यं वक्ष्ये नामस्वरशत्रुमित्रवर्णनयम् ।
वर्गाष्टकसंयुक्तं स्वरान्वि[8]तं तज्जगत्[9]ख्यातम् ॥ ३५ ॥

---

१. 'ण' ख. ग. पाठः. २. 'स' ग. पाठः. ३. 'डादपि च वि' ख. पाठः. ४. 'कालव', ५. 'का' ग. पाठः. ६. 'शो' ख. पाठः. ७. 'नि' क. घ. पाठः. ८. 'तं जग' ग. पाठः. ९. 'गद्व्यातम् ॥' क. घ. पाठः.

अकचटतपयशवर्गाः पूर्वाद्यास्ते भवन्ति तेऽष्टौ च ।
ते पञ्च स्वरभेदा[१]ः क्रमेण नवकोष्ठके तत्र ॥ ३६ ॥
प्रथमः स्वरो द्वितीयः कचटतपयशो नवाक्षरो वर्गः ।
इद्वयखछठथफरषा द्वितीयवर्गः समुद्दिष्टः ॥ ३७ ॥
पञ्चकला षष्ठकला गजडदबलसा[२]स्तृतीयवर्गोऽयम् ।
एऐघझढधभवहाश्चतुर्थवर्गः समाख्यातः ॥ ३८ ॥
ओ औ बिन्दुविसर्गौ ङञणनमाश्चैव पञ्चवर्गोऽयम् ।
इत्येवं पञ्चस्वरनवांशकोऽयं समाख्यातः ॥ ३९ ॥
अरिमित्रराजसेवाभार्यासम्बान्धि[३]मन्त्रिदेवानाम् ।
स्वांशा[४]ः फलदा[५] ज्ञेया[६]ः प्राणहरा[७]ः शत्रुवर्गा[८]ंशाः ॥ ४० ॥
नाम्नः पञ्चमवर्गः शत्रुर्लाभस्तृतीयवर्गोऽयम् ।
कौमारः स्वल्पफलः फलरहितोऽयं चतुर्था[९]ंशः ॥ ४१ ॥
अथ कथयामि समासादायबलं सर्वकार्यसन्दीपम् ।
अकचटतपयशपतयः प्रागाद्यास्ते तदाष्टायाः ॥ ४२ ॥
ध्वजधूमसिंहमण्डलवृषभखरद्विरदवायसाश्चाष्टौ ।
प्रातिप(त्?दमा)रभ्य ततः प्रभुञ्जते तत्र पूर्वाद्याः ॥४३॥
ध्वजवृषभा[१०]सिंहवारणातिथिषु नरै[११]ः पूर्वमाहवं गच्छेत् ।
ध्वाङ्क्षखरधूममण्डलदिनतिथिकाले ततः पश्चात् ॥ ४४ ॥

ध्वाङ्क्षाद् ग्राममृगः शुनोऽधिकबलस्तस्मात् खरस्तद् वृष-
रतस्मान्मत्तगजो गजाद् द्विपरिपुस्तस्माद् ध्वजस्तद्ध्वजात् ।

---

१. 'दात् क' क. पाठः. २. 'स' क. ग. पाठः. ३. 'न्धितन्त्रदे' ख. पाठः. ४. 'शः' ग. पाठः. ५. दो', ६. 'यः', ७. 'रः', ८. 'शः' क. ग. पाठः. ९. 'थोंऽ' ग. पाठः. १०. 'भवारणासिंहति' क. घ. पाठः. ११. 'रः सर्वदा भयं ग' ख. पाठः.

धूमो वीर्यतमस्ततः परतरो[1] नास्त्यायवृन्देन[2] वा
चक्षियायस्य[3] बलाबलोदयगतिं यो वेत्ति सोऽयं बुधः ॥४५॥

इति सङ्ग्रामविजयोदये पक्षिचक्रपरिज्ञानं नाम
अष्टमोऽध्यायः ।

---

अथ नवमोऽध्यायः ।

सकल[4]जगदुदयहेतोः सवितुश्चारो निगद्यतेऽद्य मया ।
सकलफलाफल[5]जीवितजया[6]जयोद्दीपनं पुंसाम् ॥ १ ॥
आदित्यवशा[7]ः सर्वे ग्रहस्वराशो[8]डुवर्णराशिखगाः ।
उद्यन्तेऽत्र मुहूर्ताः फणिनो रुद्रांशकाः सततम् ॥ २ ॥
तस्मादादित्यबलं सर्वेषामुत्तमोत्तमं श्रेष्ठम् ।
तज्ज्ञातव्यं सम्य[9]ग् यत्नेन सुधीमतात्मविदा ॥ ३ ॥
दग्धं स्थितमभिलषितं विद्धं दृष्टं च[10] यस्य सङ्क्रमितम् ।
ऋक्षं रविणा ग्रस्तं युद्धे तद् वर्जयेत् पुरुषः ॥ ४ ॥
सप्तशलाकाचक्रं पूर्वाद्यं स[11]र्वकार्यसन्दीपम् ।
आग्नेयादियमान्तं समालिखेद् युद्धभूमितले ॥ ५ ॥
भुक्तं दग्धं रविणा स्थितं समालिङ्गितं च नक्षत्रम् ।
अभिलषितं तस्याग्रे स्थितं शलाकाहतं विद्धम् ॥ ६ ॥

---

१. 'मो', २. 'ण च विद्या य' ख. पाठः. ३. 'ध्या' ग. पाठः. ४. 'लोद' ख. पाठः. ५. 'लविजयापजयादिदीप' क. पाठः. ६. 'यापजयदीप' ख. पाठः. ७. 'शात्' क. ग. पाठः. ८. 'डुरा-शिवर्णकलाः' ग. पाठः. ९. 'म्यक् तदनेन' क. घ. पाठः. १०. 'च स' ग. पाठः. ११. 'सप्तकालस' क. पाठः.

यस्य रविणाभिदग्धं जन्मर्क्षं तस्य मृत्युराख्यातः ।
यस्यालिङ्गितमृक्षं नाम्नस्तस्याहवे[1] निधनम् ॥ ७ ॥
यद्धूमाकुलमृक्षं यस्यास्ते तस्य विग्रहे भङ्गः ।
यस्य शलाकाविद्धं कुलक्षयस्तस्य निर्दिष्टः ॥ ८ ॥
जन्मत्रयनामर्क्षं[2] दग्धाश्लिष्टं प्रविद्धधूमहतम्[3] ।
सवितुर्गाढं किरणैर्यस्यास्ते तस्य मरणं स्यात् ॥ ९ ॥
यस्याधानं[4](वि ? भ)विद्धं मरणं तस्यैव भानुना गाढम् ।
कर्मभविद्धो निस्स्वो जन्मभविद्धो भयं तस्य ॥ १० ॥
रेखाद्वयमालिख्य द्वाभ्यां तद् भेदयेत्[5] पुनश्चापि ।
रेखाचतुष्कमासां कोणेषु च दापयेन्मतिमान् ॥ ११ ॥
ईशस्थाने मेषं ।सिंहं प्राच्यां धनुः शिखिस्थाने ।
तत्पार्श्वगतो वृषभो याम्ये कन्या मृगः कोणे ॥ १२ ॥
तस्य समीपे मिथुनं तुला च वरुणे घटश्च[6] वायव्ये ।
कर्किस्तस्य समीपे सौम्ये कीटो झषश्चान्त्ये ॥ १३ ॥
द्वादशराशिसमेतं चक्रं संलक्षयेच्चतुष्कुम्भम् ।
राशित्रितयं कुम्भं रिक्तं पूर्णं रवेश्च वशात् ॥ १४ ॥
यस्मिन् कुम्भे सूर्यः स्थितो भवेद् रिक्तकुम्भमशुभकरम् ।
पूर्णं तदग्रकुम्भं जयप्रदं सर्वसिद्धिकरम् ॥ १५ ॥
यन्मासे यत्र रविर्दिग्राशौ तिष्ठति त्रिशूलाख्ये[7] ।
सा दिग् विवर्जनीया शुभेषु रविसञ्चरी नित्यम् ॥ १६ ॥

---

१. 'वे भवेन्निध' ख. पाठः. २. 'म्न', ३. 'सि' घ. पाठः. ४. 'नं विद्धं' ग. पाठः. ५. 'येत् तानि ।' क. ख. पाठः. ६. 'घटश्चा' ख. पाठः. ७. 'स' ग. पाठः.

न कृषिं न च वाणिज्यं न स्थानं नाहवं न माङ्गल्यम् ।
न विवाहं न च यात्रां न वेशनं कारयेद् धीमान् ॥ १७ ॥

दिक्षु विदिक्षु च संस्थं सूर्यकवाटं समस्तदोषकरम् ।
आत्मार्थहरणमुग्रं तत् स्थानं वर्जयेन्मतिमान् ॥ १८ ॥

पुनरुदयादित्यबलं वक्ष्येऽहोरात्रमध्यतः सारम्[1] ।
प्राच्यां प्रथमप्रहरे मध्याह्ने चोत्तरे सवितुः ॥ १९ ॥

त्रिप्रहरे वायव्ये वारुण्यामस्तमे ततो दृष्टिः ।
निर्ऋतौ च निशायामे शङ्करनिलयेऽर्द्धरात्रेऽपि ॥ २० ॥

प्रहरत्रयेऽपि याम्ये निशान्तकालेऽग्निदिग्विशेषस्थः[2] ।
अग्रे[3]स्थितस्य समरे दृष्टेर्घातं रविः कुरुते ॥ २१ ॥

पृष्ठे स्थितस्य विजयः साक्षात् तस्यैव निर्दिष्टः ।
इत्थंप्रकारविदितं ज्ञातव्यं तद्बलं विदुषा ॥ २२ ॥

अथ रविचक्रं वक्ष्ये समस्तहोरागमोत्तमं तथ्यम् ।
जीवितमरणजयाजयलाभालाभप्रदीपं च ॥ २३ ॥

यदधस्त्रिशूलमूर्ध्वं त्रिदण्डनवशृङ्गसंयुतं चक्रम् ।
पावकमरुद्द्विरेखं याम्योत्तरभिन्नषड्रेखम् ॥ २४ ॥

संलिख्य भूप्रदेशे समस्ततारा: क्रमेण तच्चक्रे ।
विन्यस्य च संगणयेत्[4] प्रारभ्याधस्त्रिशूलाग्रात् ॥ २५ ॥

ऋक्षत्रयं त्रिशूले त्रिदण्डनवशृङ्गमध्यनवतारा: ।
मरुदनलयोश्चतुष्कं दक्षिणसौम्ये द्विषट्कं च ॥ २६ ॥

---

१. 'स्य तत्सारम् ।' क. घ. पाठः. २. 'देशस्थः' क. ग. पाठः. ३. 'ग्नि' ग. पाठः. ४. 'तं' ख. पाठः.

पूर्वं त्रिशूलमध्ये दिनकरसंस्थं च विन्यसेद्दक्षम् ।
पश्चात् क्रमेण शेषं संगण्य जयाजयं ब्रूयात् ॥ २७ ॥
दग्धं श्लिष्टं धूपितमनेन पूर्वं त्रिशूलसंस्थं च ।
तज्जन्मर्क्षं यस्य हि मरणं तस्याहवे प्राहुः ॥ २८ ॥
नवशृङ्गस्थिततारा: कष्टाश्चत्वारि पुण्यरूपाणि ।
त्रीणि क्रूराणि सदा द्वादशका: सौम्यरूपिण्यः ॥ २९ ॥
आग्नेयवायुसंस्था: सदा चतस्रो जयप्रदायिन्यः ।
द्वादश शूलाग्रस्था: समरे मृत्युप्रदा: प्रोक्ताः ॥ ३० ॥
रविचक्रबलं कथितं होराशास्त्रार्णवात् समुद्धृत्य ।
पुनरन्यद् वक्ष्येऽहं लाभालाभस्वरूपं च ॥ ३१ ॥
रविकुजगुरुसौराणामग्रे रविगुणरसाष्टमास्तारा: ।
शशिबुधसितोरगाणां पृष्ठे द्विमुनीषुनवसंख्या: ॥ ३२ ॥
उल्का दशमं सवितुर्भूकम्पः सप्तमं च नक्षत्रम् ।
मोघं त्रिसप्तमर्क्षं त्रिपञ्चमं ब्रह्मदण्डोऽयम् ॥ ३३ ॥
उद्वेगदहनमुल्का कुरुते मोघं भयं महामृत्युम् ।
सर्वविनाशं दण्डः स्थानभ्रंशं क्षणात् कम्पः ॥ ३४ ॥
यात्राविवाहमङ्गलसङ्ग्रामारम्भवेश्मवेशेषु ।
विद्यार्थार्जनसस्यप्रारम्भे वर्जयेत् तानि ॥ ३५ ॥
सङ्क्रान्तिचक्रमन्यत् फलाफलोद्दीपमत्र कथयामि ।
शूलार्पितत्रिकोणे त्रिषट्कबिन्दुं त्रिदिक्षु गतम् ॥ ३६ ॥

---

१. 'बलाबलं ब्रू' क. ख. घ. पाठः. २. 'शि' ख. पाठः. ३. 'दूषित' क. ख. पाठः. ४. 'द्वाविंशमु', ५. 'खं', 'क्षं' ग. पाठः. ६. 'कं' ख. पाठः.

आलिख्य सूर्यसंस्थं नक्षत्रं शूलमध्यगं न्यस्त्वा ।
ब्रूयात् संगण्य फलं सर्वेषां प्राणिनां तथ्यम् ॥ ३७ ॥
द्रव्यक्षयमर्थाप्तिं स्थानवियोगं क्रमात् स्थितिप्राप्तिम् ।
भूपारिभयविरोधं नृपसत्कारं रविः कुरुते ॥ ३८ ॥
अथ संक्रान्तिनयानयपूर्वं कथितानि यानि पौरस्त्यात् ।
सप्तविधा सङ्क्रान्तिः फलाफलोद्दीपिनी ज्ञेया ॥ ३९ ॥
ध्वाङ्क्षी महोदरीयं घोरा मन्दाकिनी सुमन्दा च ।
मिश्रकला नक्तचरी विज्ञेयाः सूर्यवाराद्याः ॥ ४० ॥
ध्वाङ्क्षी वैश्यहिता स्यान्महोदरी म्लेच्छचोरशबराहिता ।
घोरा चतुर्थसुखदा नृपतिषु मन्दाकिनी शस्ता ॥ ४१ ॥
ब्रह्मप्रिया च *मन्दा गोमृगसुखदा च †मिश्रका ज्ञेया ।
नक्तचरी नटकाप्ता विज्ञेयाः सप्त संक्रान्त्यः ॥ ४२ ॥
नृपपीडां पूर्वाह्णे मध्याह्ने ब्रह्मजातिसन्तापम् ।
अपराह्णे वणिगार्तिं चास्तमये शूद्रपीडां च ॥ ४३ ॥
सांध्ये चतुष्पदार्तिं नटनर्तकदुःखमर्धरात्रे तु ।
त्रिप्रहरे स्वामिवधं पीडां संलिङ्गिनामुषसि ॥ ४४ ॥
ऊर्ध्वमुखी रविमुक्ता होरा सर्वार्थदायिनी प्रोक्ता ।
साधोमुखी च न शुभा तदग्रगा तिर्यगर्थहरा ॥ ४५ ॥

१. 'ल' घ. पाठः. २. 'हो' क. पाठः. ३. 'सप्त सङ्क्रान्त्यः ॥' ग. पाठः. ४. 'हो' क. पाठः. ५. 'शुभदा' ख. पाठः. ६. 'सन्ध्या च' ग. पाठः. ७. 'सङ्क्रान्तिर्लिङ्गि' क. ख. घ. पाठः.

* 'सुमन्दे'ति पूर्वं पठिता । † 'मिश्रकले'ति पूर्वमुक्तम् ।

मूर्ध्नि त्रीणि मुखैकमक्षियुगले [1]द्वे चाष्ट हस्तद्वये
चाष्टौ पादयुगे च पञ्च हृदये [2]भानि क्रमाद् विन्यसेत् ।
राज्यं मस्तकभे बुधो वदनभे भोगी भवेन्नेत्रभे
दस्युर्बाहुग[3]भे धनी हृदयभे हीनायुरङ्घ्रिद्वये ॥ ४६ ॥
बालकस्य तु शुभाशुभमादौ सूर्यच[4]न्द्रनयतः परिगण्य ।
पण्डितो वदतु वेधविधा[5]तं कालमृत्युमपमृत्युममोघम् ॥ ४७ ॥

इति सङ्ग्रामविजयोदये रविचारचक्रचङ्क्रमणो नाम
नवमोऽध्यायः ॥

---

## अथ दशमोऽध्यायः ।

अथ चन्द्रचारचेष्टास्वभावगुणचित्तवृत्तिसत्त्वबलम् ।
ब्राह्मीयाद् वक्ष्येऽहं तद्राज्ञःशत्रुविजयाय ॥ १ ॥
आत्मविदाममृतोऽयं विधेर्मनःशक्तिरीश्वरस्यैव ।
[6]अपां [7]भर्ता सृष्टिः सर्वेषां चन्द्रमाश्च भवेत् ॥ २ ॥
तिथिरेकगुणोपे[8]ता नक्षत्रं तच्चतुर्गुणं प्रोक्तम् ।
वारोऽष्टगुणः सा[9]क्षाच्चन्द्रोऽयं शतगुणः प्रोक्तः ॥ ३ ॥
वर्णायस्वरहोरानक्षत्रग्रहमुहूर्तसंस्थश्च ।
चन्द्रः सप्तविधोऽयं ज्ञातव्यः शास्त्रसंविद्भिः ॥ ४ ॥
अर्धेन्दुसदृशमाद्यं चतुस्त्रिशूलान्वितं समा[10]लिख्य ।
संस्थितशूला[11]ग्रान्तः पञ्चस्वरबिन्दु[12]शूलं च ॥ ५ ॥

---

१. 'द्वेऽष्टौ च ह' क. घ. पाठः. २. 'ता' घ. पाठः. ३. 'ते' क. ख. घ. पाठः. ४. 'क्रनयन' क. ख. पाठः. ५. 'न्' ग. पाठः. ६. 'आ' क. ङ. पाठः. ७. 'ह' ख. पाठः. ८. 'ता यन्नक्षत्रं चतु' ख. ग. पाठः. ९. 'क्षान् स चन्द्रमाः श' क., 'क्षाच्चन्द्रमाः श' ग. पाठः. १०. 'ख्यातम् ।', ११. 'ग्रस्थं प' ख. पाठः. १२. 'शूलमूलं' ग. पाठः.

शूलस्याग्रे द्वादश नक्षत्राणीह मध्यदेशे तु ।
द्वादश भानि क्रमशो बाह्ये चत्वारि विन्यस्य ॥ ६ ॥
आद्योऽधः शृङ्गस्थे सौम्ये शृङ्गे स्वरो द्वितीय(ञ्च ? श्च) ।
यमशृङ्गगस्तृतीयः प्रणवो ग्रन्थौ चतुर्मध्ये ॥ ७ ॥
भौमोऽधः[1] शृङ्गगतो दक्षिणशृङ्गे च[2] गुरुबुधौ वामे ।
शुक्रो मध्यमशृङ्गे मन्दो ग्रन्थौ समाख्यातः ॥ ८ ॥
यन्मासे प्रथमतिथौ चन्द्रेणाधिष्ठितं च नक्षत्रम् ।
तदधःशूलविमध्ये न्यस्त्वा मेषादि सङ्गण्य ॥ ९ ॥
शूलचतुष्के मृत्युर्विजयो मध्यद्विषट्कसंस्थे च ।
बाह्यचतुष्के च भयं विज्ञेयं चन्द्रतः सर्वम् ॥ १० ॥
अर्धशशाङ्काकारं याम्योत्तरमध्यभागनवशृङ्गम् ।
संलिख्य चन्द्रशूलं समस्ततारागणोपेतम् ॥ ११ ॥
याम्यत्रिशूलमध्यमशृङ्गे चन्द्रस्थितं च नक्षत्रम् ।
न्यस्त्वा क्रमेण शेषं सङ्गण्य जयाजयं ब्रूयात् ॥ १२ ॥
नवशूलस्थे मरणं युधि विजयोऽन्तर्द्विषट्कसंस्थे च ।
बाह्ये भयं च षट्के जन्मर्क्षे तस्य निर्दिष्टम् ॥ १३ ॥
दक्षिणवामर्क्षाणां वक्ष्यामि फलं[3] पृथक् पृथक् सारम् ।
समपादे समभेऽस्मिन् विजयः स्याद् वामकुक्षिगते ॥ १४ ॥
एकचरणे त्रिशूले व्याधिर्भङ्गो द्विपादनक्षत्रे ।
विषमे त्रिपादयुक्ते विजयस्तस्याभिनिर्दिष्टः ॥ १५ ॥

---

१. 'धरशृ' क, घ. पाठः. २. 'थ' ग. पाठः. ३. 'ब' ग, ङ. पाठः.

भङ्गस्त्रिपादयुक्ते दक्षिणशृङ्गे समेऽथ रोगभयम् ।
सव्येतरपार्श्वे द्वे सिद्धिकरे दक्षिणे सन्धिः ॥ १६ ॥
जन्मनि कर्मणि गर्भे नक्षत्रे वाथ चन्द्रमारूढे ।
अष्टमराशौ लग्ने यस्य प्राप्तेऽपि तन्मरणम् ॥ १७ ॥
पूर्वं यन्नक्षत्रं प्रगण्यते यत्र संस्थितश्चन्द्रः ।
ताडयतु षष्टिभि(स्तैश्च ? स्तच्च)न्द्रावस्थां समुद्दिश्य ॥ १८॥
तत्पिण्डे संयुक्ता नक्षत्रस्यैव नाडिकास्तत्र ।
पश्चाद् दिनघटिकायां व्युत्क्रान्तायां क्षिपेद् राशिम् ॥
तत् सन्ताड्य चतुर्भिर्भागं कुर्यात् सपञ्चतारेण ।
तल्लब्धं च गृहीत्वा द्वादशभिर्भज्यते तत्र ॥ २० ॥
शेषावस्था ज्ञेया लब्धा भुक्तिः प्रकीर्तिता सद्भिः ।
दिनराशिविभागैस्ताः शेषा नाड्यः समाख्याताः ॥ २१ ॥
चरितः स्वस्थो मृतवान् हसितो जातो ज्वरी सु(मर ? रम)-
[णश्च ।
नष्ट उपोषित इन्दुः क्रीडितसुप्तः प्रभुक्तश्च ॥ २२ ॥
चरितः करोति भङ्गं स्वस्थः स्वास्थ्यं मृतश्च मरणभयम् ।
हसितस्तुष्टिं जातो लाभं ज्वरितो ज्वरं चन्द्रः ॥ २३ ॥
रमितो रागोद्दीपं नष्टो नष्टं ह्युपोषितः कलहम् ।
क्रीडी विजयं सुप्तः सुखं प्रभुक्तः शुभं नित्यम् ॥ २४ ॥

---

१. 'रोगं त्रिपा' क. घ. पाठः. २. 'भागयु', ३. 'भ्यां' ग. पाठः. ४. 'भवेद् राशिः ॥' क. ख. घ. ङ. पाठः. ५. 'ग्राहं कु' ख. पाठः. ६. 'य' क. पाठः. ७. 'भुं' ग. पाठः. ८. 'ए' ख. पाठः.

द्वादश शशिनोऽवस्थाः कथिताः सम्यक् समासतस्तस्य ।
ज्ञात(व्या ? व्यो ऽ)नेन ततो जयाजयौ[1] युद्धकाङ्[2]क्षाणाम्
[॥ २५ ॥

ताराचक्रमपूर्वं कथयामि शुभाशुभाभिसन्दीपम् ।
ऊर्ध्वं नवरेखाभिर्विलिखेत् तिर्यक् त्रिरेखाभिः ॥ २६ ॥
आग्नेयादियमान्तं न्यस्त्वा भकुलं त्रिरन्ध्रकूटेषु ।
यस्मिन् क्रूरस्तिष्ठति तस्मिन् वेधः समुद्दिष्टः ॥ २७ ॥
आधानजन्मकर्म[3]विपन्निधनकर्मसहजानि विद्धानि ।
यस्यैव सन्ति मरणं तेभ्यस्तस्यैव निर्दिष्टम् ॥ २८ ॥
यदि सौम्यग्रहविद्धं नहि मरणं तस्य जन्मनामर्क्षम् ।
क्रूराक्रूरविविद्धं क्षतं[4] भयं वाथ सङ्ग्रामे ॥ २९ ॥
अथ सूर्यात्मजचारं सर्वेषां प्राणिनां शुभाशुभदम् ।
संक्षेपाद् वक्ष्येऽहं होराशास्त्रार्णवात् सा[5]रम् ॥ ३० ॥
आब्रह्मस्तम्बान्तं भूतग्रामं चतुर्विधं प्रोक्तम् ।
यः संहरेत् समस्तं शनैश्चरः स्यात् स कालाख्यः ॥ ३१॥
तद्भुक्त[6]गूढविद्धस्थितानि चत्वारि भानि घोराणि ।
तानि त्यजेन्नयज्ञो जयाभिकाङ्क्षी नरः समरे ॥ ३२ ॥
यद् भुक्तं तद्दग्धं तेनाश्लिष्टं स्थितं त[7]दग्रस्थम् ।
यद्धूमं तद्विद्धं सप्तशलाका[8]स्थितं च[9]र्क्षम् ॥ ३३ ॥

---

१. 'यौ' ख. पाठः. २. 'काङ्क्षिणा ताराः ॥ अथ च' ग. पाठः. ३. 'णि धनसहजभानुरर्धानि ।', ४. 'यं' ख. पाठः. ५. 'समुद्धृत्य ॥' ग. पाठः. ६. 'दृष्टवि' क. ख. घ. पाठः. ७. 'च नक्षत्रम् ॥', ८. 'न्वितं च नक्षत्रम्' ग. पाठः. ९. 'क्रम् ॥' क. घ. पाठः.

तस्यैव भुक्तिवेलादृष्टिस्थानं च वक्ष्यतेऽद्य मया ।
प्रथमं दिवसाधिपतिः समुदेति ततो ग्रहाः शेषाः ॥ ३४ ॥
षोडशभागैर्भक्तं दिनरात्र्योर्यच्छनैश्चरस्यात्र ।
सा भुक्तिर्मृत्युमुखी [1]समरे नहि सङ्ग्रहीतव्या ॥ ३५ ॥
भौमार्कयोस्तु भागौ परिस्मृतौ भङ्गरोगदौ विशुभौ ।
भागौ हिमकरबुधयोः शुभप्रदौ भोगदौ भवतः ॥ ३६ ॥
सुरगुरुभार्गवभागौ शुभदावायुःप्रदौ च सङ्ग्रामे ।
दिनकरसुतस्य भागः संहारो मृत्युदो भवति ॥ ३७ ॥
यात्राविवाहमङ्गलसेवाराजेष्टदर्शनं सर्वम् ।
नाशयति तस्य वेला दृष्टं नष्टं मृतं चैव ॥ ३८ ॥
वाराधिपतिर्भुङ्क्ते पूर्वान्तिमयोर्दि[2]नस्य रात्रेश्च ।
पश्चात् तत्र क्रमशः प्रभुञ्जतेऽपि ग्रहाः शेषाः ॥ ३९ ॥
वक्त्रकराङ्घ्रिद्वयकटिकुक्षिशिरोनेत्रयुग्मगुह्येषु ।
चन्द्रयुगा[3]नलगुणयुगभूता[4]ग्निकराङ्घ्रयो न्यस्ताः ॥ ४० ॥
दुःखार्थलाभदेशभ्रमणक्षतभोगराज्यतुष्टिवधाः ।
वक्त्रार्पितसौरिस्थितनक्षत्रादिक्रमात् प्रोक्ताः ॥ ४१ ॥
अथ गुलिकः क्रूरत[5]मः शनैश्चरस्यात्मजः खलः पापः ।
सर्पाकृतिरत्युग्रो निगद्यते सर्वसत्त्व[6]हरः ॥ ४२ ॥
नीलाञ्जनसङ्काशो रक्ताक्षो विषमभीषणो दीर्घः ।
पञ्चास्यः पृथुदंष्ट्रो भयङ्करः सर्वहा गुळिकः ॥ ४३ ॥

---

१. 'तस्मिन् मरणं न सं' ग. पाठः २. 'द्वि' क. ख. पाठः. ३. 'नि' क. घ. पाठः. ४. 'ङ्घ्रि', ५. 'रः' क. ग. पाठः. ६. 'भङ्गकरः' ग. पाठः.

यात्राविवाहमङ्गलविद्याद्रव्यार्जनादिसेवायाम्[1] ।
भोजनजलावगाहनशय्यादिषु वर्जयेद् गुळिकम् ॥ ४४ ॥
गुळिकं वदन्ति केचित् समस्तसन्धिस्थमैन्द्रशास्त्रज्ञाः ।
केचिच्छनैश्चरगतं शुक्रगतं केचिदाचार्याः ॥ ४५ ॥
तद्भुक्तिं वक्ष्येऽहं समकाले सर्ववारवेलायाम् ।
अर्धप्रहारयुक्तां[2] भयङ्करीं[3] सर्वसत्त्वानाम् ॥ ४६ ॥
भूतार्तिकरो[4] ज्ञेयो ध्रुवश्च गुळिकस्य सर्वलोकेषु ।
तद् दिनपेन च गुणितं षष्ट्या विभजेत् ततो लब्धाः ॥
नाड्यः शेषविनाड्यः समस्तभूतात्मनाशकारिण्यः ।
ब्रह्माच्युतवृषभध्वजरूपिण्यः सर्वकालेषु ॥ ४८ ॥
सूर्यादीनां प्राप्तिः षट्शरयुगवह्निनेत्रचन्द्रहताः ।
तुरगरसबाणयुगगुणकरेन्दुभिस्तस्य मोक्षोऽयम् ॥ ४९ ॥
तद्वारादियमान्तं त्रिंशद्गुणितं प्रमाणपरिहीणम् ।
वसुहृतेना[5](ड्य ? डि)विनाड्यः प्रोक्तास्तात्कालिको गु-
[ळिकः ॥ ५० ॥
यस्यामुदेति कालो गुळिकस्यार्धः[6] स कालहोरायाम् ।
शुभकार्येषु निषिद्धो[7] विशुभेष्वथ सङ्ग्रहीतव्यः ॥ ५१ ॥
अथ विषमकालगुळिकं वक्ष्येऽहं पूर्वशास्त्रतः सारम् ।
वसुभिर्दिनं च भक्तं लब्धं षष्ट्या हतं पश्चात् ॥ ५२ ॥

---

१. 'रि' ग. पाठः. २. 'क्ता', ३. 'री' ख. ग. पाठः.
४. 'क्षि' क. ग., 'म्रि' ख. घ. पाठः. ५. 'न्नाड्य' ख. ग. पाठः.
६. 'घस्य का' क. ग. ङ. पाठः. ७. 'द्धा' क. ख. पाठः.

रा[1]श्युर्वारुकमेत[2]त् षष्ट्यापह[3]तं फलानि तत्रैव ।
संस्थाप्य वसुविभक्तं लब्धं राशौ च सं(यु ? यो)ज्य ॥
दिनपेन गुणितराशिं समुद्धरेत् षष्टिभिस्तु तल्लब्धाः ।
नाड्यो ज्ञेयास्तस्मिन् फलानि शेषाणि चान्तानि ॥
विषमः कथितः साक्षाद् गुळिको लोके भुजङ्गरूपोऽयम् ।
तं वर्जयेत् प्रयत्नाद् यदि वाञ्छेद् दीर्घजीवित्वम् ॥ ५५ ॥
यामार्धपञ्चमेऽस्मिन् निहन्त्यसौ भानुसप्तमे साक्षात् ।
चन्द्रं चतुर्थषष्ठे कुजस्तृतीये दशार्धे च ॥ ५६ ॥
द्विचतुर्थयोश्च सौम्ये प्रथमे सूरिस्तृतीयके हन्ति ।
शुक्रे स सप्तमेऽस्मिन् द्वितीयके हन्ति तत्काले ॥ ५७ ॥
षष्ठे मन्दो हन्ता प्रथमो[4] मृत्युः प्रकीर्तितो लोके ।
उदयः कालस्य ततो मया समासात् समुद्दिष्टः ॥ ५८ ॥
तस्य स्थानं वक्ष्ये प्राच्यामुदितं दिनाधिपं न्यस्त्वा ।
अपसव्यक्रमयोगात् संगण्य वदेत् ततो भ्राम्येन् ॥ ५९ ॥
यत्रास्ते सूर्यसुतस्तत्रासीत् कालचोदितो गुळिकः ।
सार्धप्रहरविभो[6]क्ता ज्ञेयो भूचक्रतः सम्यक् ॥ ६० ॥

सूर्यादयोऽष्टौ सततं ग्रहास्ते
येऽनन्तपूर्वाः फणिनस्ततोऽष्टौ ।
यामार्धभोग्याः प्रचरन्ति साक्षात्
समस्तवारेषु यथाक्रमेण ॥ ६१ ॥

---

१. 'राशिर्वा' ख., 'शान्त्युर्वा' घ. पाठः २. 'कं ष' क. पाठः. ३. 'ह' ख. पाठः. ४. 'मे' ख. ग. पाठः. ५. 'म्यः ।' क. ग. पाठः. ६. 'भक्तो ज्ञे', ७. 'भ्रान्त' ङ. पाठः.

वाराधिनाथो दिवसस्य रात्रे-
राद्यन्तभोगीह ततस्तु शेषाः ।
विभुञ्जते षट् क्रमशो ग्रहास्ते
रात्रौ दिवा वा बलवान् दिनेशः ॥ ६२ ॥

इति सङ्ग्रामविजयोदये चन्द्रशनिचारगुलिकविधानो नाम
दशमोऽध्यायः ॥

---

अथैकादशोऽध्यायः ।

अथ राहुचाररूपं देवासुरयक्षदैत्यदुर्लङ्घ्यम् ।
समरे जयाय राज्ञां ग्रहाधिकं तत् प्रवक्ष्यामि ॥ १ ॥

यो रविचन्द्रौ[1] ग्रसते यस्माद् विलयः समस्तभूतानाम् ।
दिक्फणिनो यस्यांशाः स कालरूपो महान्[2] राहुः ॥ २ ॥

संवत्सरमासतिथिप्रहरादिशाराशिभांशनाड्या(द्याः ? द्यैः)।
सोऽप्यष्टधा विभिन्नश्चरति सदा कालरूपेण ॥ ३ ॥

संवत्सरराहुरसौ प्रथमो दिनरात्रिषष्टिनाड्यशनः ।
षष्टिर्नाड्यश्च तयोर्दिनरात्र्योर्वत्सराः प्रोक्ताः ॥ ४ ॥

प्राक् प्रभवादिवृषान्तं याम्ये चित्रादिदुर्मुखान्तं च ।
अहिमाद्यविरोधान्तं वरुणे धात्रिक्षयान्तं च ॥ ५ ॥

एवं विचरेद् राहुः कालः संवत्सरेषु सर्वेषु ।
तदधिष्ठितनक्षत्रं ज्ञातव्यं चानुपूर्व्येण ॥ ६ ॥

अपसव्यक्रमयोगाद् राशिषु सर्वेषु भेषु वर्षाख्यः ।
एकस्यां होरायां सोऽष्टादशमासभुग् राहुः ॥ ७ ॥

---

१. 'न्द्रग्रसनो य' क. ख. पाठः. २. 'हारा' क. ग. पाठः.

तं ज्ञात्वा भुजगेन्द्रं तारांशकराशिदिग्विभागगतम् ।
पश्चात् सांवत्सरिको जयाय दद्याद् बलिं तस्यम् ॥ ८ ॥

अथ मासराहुमुग्रं सङ्क्रान्तिवशाच्चरन्तमर्केण ।
तं वक्ष्यामि समासाद् राशिस्थं शूलभेदेन ॥ ९ ॥

मेषद्विपारिधनुषः प्राच्यां वृषभः स्तनी मृगो याम्ये ।
वरुणे यमतौलिघटाः कर्कटकीटौ झषः सौम्ये ॥ १० ॥

यः सर्वभूतदमनो मासं प्रति याति दिग्दिशां क्रमशः ।
स हि मासभुक् प्रचण्डो यत्र रविस्तत्र राहुः स्यात् ॥११॥

अथ चण्डराहुरन्यो निगद्यते विष्टिभुक्तिभागेशः ।
यत्र स्थिता च विष्टिस्तत्रास्ते चण्डराहुरयम् ॥ १२ ॥

कृष्णे त्रितिथौ प्राच्यां सप्तम्यामीशगोचरे चरति ।
कौबेर्यांञ्च दशम्यां वायव्यायां चतुर्दश्याम् ॥ १३ ॥

वरुणे सिते चतुर्थ्यामष्टम्यां राक्षसालये राहुः ।
एकादश्यां याम्ये हुताशने पौर्णमास्यां च ॥ १४ ॥

पुनरन्यं वक्ष्येऽहं घोरतरं प्रहरराहुमत्युग्रम् ।
आवेष्ट्य धराचक्रं रविणा समुदेति स प्रहरः ॥ १५ ॥

अग्रे संस्थः समरे म्रियते पुरुषः सुरेन्द्रतुल्योऽपि ।
पृष्ठे स्थितोऽत्र विजयी पुच्छस्थो भङ्गमाप्नोति ॥ १६ ॥

१. 'लिं' क. ख. ग. घ. पाठः. २ 'ह' ख. ङ. पाठः. ३. 'दिगधीशात् क', ४. 'ग्विभ' ग. पाठः. ५. 'तृतीये प्रा', ६. 'कृष्य ध' ख. पाठः. ७. 'पि' ग. पाठः.

अथ पक्षराहुमन्यं वक्ष्येऽहं शाम्भवात् समुद्धृत्य ।
उभयो[2]श्च सितासितयोश्चरन् फणी पक्षयोस्तिथिभिः ॥१७॥
रेखाः प्राक्पश्चिमयोर्लिखितव्याः सप्त दक्षिणोत्तरयोः ।
पुनरपि च सप्त रेखास्तिर्यग्भूताः स्थिताश्चक्रे ॥ १८ ॥
वायव्याग्नेयान्ताः संस्था रेखाः समस्तपरिघा[3]भाः ।
संलिख्य कलाजालं न्यस्येत् सितकृष्णभेदेन ॥ १९ ॥
अग्निदिशा रेखाग्रे स्वगे विसर्गास्त्रिपञ्चमो ह्रस्वः ।
पवनानलरेखायाँ[4] न्यस्तव्य[5]श्चानुपूर्व्येण ॥ २० ॥
दीर्घकलाभिः शुक्लो वारुण्यां दक्षिणे स्थितः पक्षः ।
ह्रस्वस्वरैः स कृष्णः प्राच्यां सौम्ये[6] स्वरैर्नित्यम् ॥ २१ ॥
त्रिंशद्वर्णान् न्यस्येद् रेखाग्रेषु क्रमेण चक्रस्य ।
वरुणादारभ्य ततो यावत् पवनाश्रमस्तावत् ॥ २२ ॥
कादिढकारान्तोऽयं शुक्लः पक्षः स याम्यपश्चिमयोः ।
धादिहकारान्तोऽयं कृष्णः प्राक् सौम्ययोः पक्षः ॥ २३ ॥
राहुरमावास्यायां वायव्ये संस्थितो महान् क्रूरः ।
आग्नेय्यां यः साक्षात् स पौर्णमासीस्थितश्चण्डः ॥ २४ ॥
यत्स्वरै[7]र्वर्णारूढो राहुर्यस्यां तिथौ च तद्भङ्गः ।
यस्य कलाक्षरविद्धं तेन भयं तस्य तद्दिवसे ॥ २५ ॥
अथ वक्ष्येऽन्यं राहुं घटिकाख्यं कालरूपिणं घोरम् ।
रविभौमसूरिबुधसितमन्देन्दुतमोग्रहेषु चरः ॥ २६ ॥

---

१. 'सारम् ।', २. 'योः श्वेता' ख. ग. पाठः. ३. 'खा' ग. पाठः. ४. 'या' ख. पाठः. ५. 'व्या' क. ग. पाठः. ६. 'म्यैश्चरेन्नित्यम् ।' क. घ., 'म्येश्चरे नित्य' ख. ग. पाठः. ७. 'स्व' ख. पाठः.

इन्द्रसमीरणपितृहरवरुणाग्निकुबेरराक्षसेन्द्रगतः ।
पादोनचतुर्घटिकाभोक्ता राहुर्भ्रमत्युदयात् ॥ २७ ॥
रात्रौ तद्वद्राहुर्दिक्षु विदिक्षु भ्रमेत् स घटिकाख्यः ।
ईरिमुरिति[1] विख्यातो भयङ्करः सर्वमर्त्यानाम् ॥ २८ ॥
वदनशिरोगलपुच्छस्थानेषु भुजङ्गमस्य नहि तिष्ठेत् ।
न ग्रहमध्यस्थानं न लङ्घयेद् ब्रह्मदण्डं च ॥ २९ ॥
दृष्टिस्थानपरिभ्रमपुच्छशिरोवक्त्रवंशकटिदेशान् ।
जानीयात् तद्राहौ विजयार्थी युद्धभूचक्रे ॥ ३० ॥
अत ऊर्ध्वमृक्षराहुं वक्ष्ये सर्वग्रहोत्तमं क्रूरम् ।
स्त्रीमित्रराजदासप्रीत्यर्थात्मप्रदीपं च ॥ ३१ ॥
अश्विन्यादि क्रमशो रेवत्यन्तं युतं त्रिनाडीभिः ।
पदपङ्क्तिक्रमयुक्तं परिविलिखेद् भुजगसन्निभं राहुम् ॥३२॥
रविभौम[2]राहुरविसुतनाडीविद्धं च यस्य नक्षत्रम् ।
स म्रियते सङ्ग्रामे यदीन्द्रतुल्यो न सन्देहः ॥ ३३ ॥
वेश्याभ्रातृसहायाः प्रीत्या धनदास्तदेकनाडीस्थाः ।
कन्याविवाहकाले परित्यजेदेकनाडीस्थाः ॥ ३४ ॥
यच्छत्रुभङ्गचक्रं तद्वक्ष्येऽन्यत् समस्तलोकमयम् ।
भुजगेन्द्ररूपमुद्यत्सचतुर्नाडि[3] त्रिदण्डयुतम् ॥ ३५ ॥
मृगशिरसि पूर्वदण्डे रविराहुविलक्षिते तु जीवस्थे ।
पूर्वच्छत्र[4]निपाते पूर्वनृपस्यैव मृत्युश्च ॥ ३६ ॥

१. 'मुनिभिरिति' ङ. पाठः. २. 'सो' ख. पाठः. ३. 'डी' क. ख. घ. ङ. पाठः. ४. 'वं शत्रुनि' ख., 'वच्छत्रुनि' क. पाठः.

चित्रा च मध्यदण्डे यदि कुजमन्दान्विता ससौम्या च ।
दुर्भिक्षं तद्देशे स (तु?) म्रियते मध्यदेशेशः ॥ ३७ ॥
दक्षिणदण्डधनिष्ठां भौमोरगभानुकेतुभानुसुताः ।
यदि पश्यन्ति समक्षं[2] दक्षिणदेशाधिपोपरतिः[3] ॥ ३८ ॥
अथ तारारगमुग्रं वक्ष्यामि समासतः खलं क्रूरम् ।
आलिख्य राहुरूपं त्रिदण्डतारामयं कुटिलम् ॥ ३९ ॥
वक्त्रे वक्षसि जठरे कट्यां पुच्छे पुनर्गले स्कन्धे ।
नाभौ च स्फिग्देशे त्रीणि त्रीणि न्यसेद् भानि ॥ ४० ॥
वक्त्रे दिन[4]नक्षत्रं न्यस्त्वा पूर्वक्रमेण पुच्छान्तम् ।
सङ्गण्य सर्वताराः पश्चाद् ब्रूयाद् बलं विबलम् ॥ ४१ ॥
वदने कट्यां वक्षसि जठरे पुच्छे स्थितं च यस्यर्क्षम् ।
पापग्रहसंविद्धं मृत्युस्तस्यैव निर्दिष्टः ॥ ४२ ॥
नाभौ कण्ठे संस्थं यस्यर्क्षं तस्य कीर्तितो विजयः ।
स्कन्धे सन्धिः प्रोक्तः स्फिग्देशे तस्य भङ्गः स्यात् ॥ ४३ ॥
रविराहुभौममन्दैर्विद्धं तारात्रयं च यस्यैव ।
तन्मृत्युर्न विदूरगत् सङ्ग्रामे व्याधितो वापि ॥ ४४ ॥
एकस्यां रविशुक्रौ नाड्यां संस्थौ शरीरनाशकरौ ।
बुधमन्दौ व्याधिकरौ गुरुभुजगौ भङ्गदौ ज्ञेयौ ॥ ४५ ॥
पुनरन्यं वक्ष्येऽहं फणिराहुं क्रूररूपिणं कुटिलम् ।
लाभालाभजयाजयसन्दीपं सर्वतः सारम् ॥ ४६ ॥

१. 'त्रामध्यमद' ग. पाठः. २. 'स्तं' ख. ग., 'स्तद' घ. ङ. पाठः. ३. 'तः', ४. 'इ' क. घ. पाठः.

अष्टाविंशतिबिन्दूनालिख्य पुनस्त्रिभिस्त्रिभिर्भक्त्वा[1] ।
चत्वारि भानि बाह्ये समालिखेत् सर्परूपा[2]भम् ॥ ४७ ॥
यस्मिंस्थितो भुजङ्ग[3]स्तच्चर्क्षं भुजगमूर्ध्नि विन्यस्य ।
शेषास्ताराः क्रमशो न्यस्त्वा ब्रूयाज्जयापजयम् ॥ ४८ ॥
मुखसप्तमनक्षत्रं यस्यो[4]धानं स मृत्युमाप्नोति ।
स्कन्धगतसप्तमर्क्षं नामर्क्षं यस्य तद्भङ्गः ॥ ४९ ॥
उदरस्थं जन्मर्क्षं यस्यास्ते तस्य शत्रुविजयः स्यात् ।
यस्य कटीगतमृक्षं तस्यापजयः समुद्दिष्टः ॥ ५० ॥
रविराहुमन्दभूमिजदृष्टं विद्धं च यस्य जन्मर्क्षम् ।
तस्य न दूरान्मृत्युः स्वस्थस्य च किं पुनर्युद्धे ॥ ५१ ॥
अथ वक्ष्ये संक्षेपाद्धोराशास्त्रार्णवात् समुद्धृत्य ।
सन्तानचक्रमेतद् राज्ञां राज्यप्रदं स्वै[5]रितुः ॥ ५२ ॥
आलिख्य सर्परूपं भूमौ नाडीत्रयान्वितं स्पष्टम् ।
बाह्ये षड् विन्यस्येत् त्रिमध्यनाडीस्थतोऽस्याग्रे[6] ॥ ५३ ॥
पितृनक्षत्रं न्यस्त्वा भुजगाधिपमूर्ध[7]भागदेशे तु ।
गणयतु सुतनक्षत्रं यावत् सप्तमण्डलं तावत् ॥ ५४ ॥
तन्नाडीगतमृक्षं यस्यास्ते तस्य राज्यमुद्दिष्टम् ।
बाह्यर्क्षं यस्यास्ते विदेशगमनं च तस्यैव ॥ ५५ ॥
मध्यमनाडीतारा यस्य सुतास्ते चिराद् भवेत् तस्य ।
यस्य हि यदन्तनाडीनक्षत्रं तस्य न च राज्यम् ॥ ५६ ॥

---

१. 'ङ्क्त्वा' क. घ. पाठः. २. 'पिणं राहुम्' ख. पाठः. ३. 'जगपस्त' क. घ. पाठः. ४. 'स्य स्थानं' ख. पाठः. ५. 'सावितुः' क. ख. ग. घ. पाठः. ६. 'ङ्गे' क. ङ. पाठः. ७. 'र्ध्नि देशभागे तु' ख. ग. ङ. पाठः.

पितृसन्तानं लभते तन्नाडीभं च यस्य नक्षत्रम् ।
एकांशे[1] यत्सूनोस्तत्प्रीतिः सर्वदा तस्य ॥ ५७ ॥

नामाक्षरराशिबलं वर्गांशकयोनिपक्षिकालबलम् ।
वेलाबलमिन्दुबलं ज्ञात्वा दद्याज्जयाय बलम् ॥ ५८ ॥

दिक्तारांशकराशिद्रेक्काणस्थं फणीश्वरं ज्ञात्वा ।
सङ्ग्रामभूमिभागे योद्धुं[2] संस्थापयेत् सम्यक् ॥ ५९ ॥

राशिस्थमुष्णकिरणं स्फुटं च कृत्वा जयाय दातव्यम् ।
तस्येच्छया च सवितुः सर्वे देवाः समुद्यन्ति ॥ ६० ॥

यन्मास यत्र रविः स्थितः स राशिस्ततश्च समुदेति ।
तस्मिन्नुदेति राहुर्भास्करचारक्रमेणैव ॥ ६१ ॥

आदाय राहुवेषं कालः साक्षादुदेति पापरतः ।
घोरो मुहूर्तयुक्तो यदा च राहुः समुद्दिष्टः ॥ ६२ ॥

अथ किं बहुभिर्वचनैः पुनःपुनर्वर्ण्यते भुजङ्गेशः ।
तद्रूपचारवेलां यो जानीयात् स दैवज्ञः ॥ ६३ ॥

सकलभुवनजन्मस्थानसंहारहेतु-
भुजगपतिरमेयः सर्वगोऽनन्तवीर्यः ।
अखिलविबुधवन्द्यो रा[3]राशः स्वयं च
प्रभुरणुरनवद्यः[4] कीर्तितः सर्वा[5]वीर्द्धः ॥ ६४ ॥

इति सङ्ग्रामविजयोदये राहुप्रचारसन्तानचक्र(रूप?)विधिर्नाम
एकादशोऽध्यायः ।

---

१. 'शकप्रसूतास्त' ङ. पाठः. २. 'द्धा' क. पाठः. ३. 'सु' ख. पाठः. ४. 'न्धः' ख. पाठः. ५. 'स' क. ख. पाठः.

## अथ द्वादशोऽध्यायः ।

अथ विष्टिचक्रमेतन्निगद्यते युद्धशास्त्रतोऽस्माभिः ।
आयोधनावनीश्वरजयापजयबोधनोद्दीपम् ॥ १ ॥
निबिडारुणोर्ध्वकेशी खेटकशूलासिधारिणी व्युग्रा ।
दक्षाध्वरनाशार्थं सृष्टा त्रिपुरारिणा विष्टिः ॥ २ ॥
साप्यष्टधा विभिन्ना प्रलयानलसदृशरूपिणी भीमा ।
दिक्षु विदिक्षु च विष्टिर्भ्रमति [2]दृढं पक्षयोरुभयोः ॥ ३ ॥
[3]ज्वालानना कराला घोरा रौद्री च या महाजिह्वा ।
बडवामुखी च मारी यमजिह्वा चाष्टधा ज्ञेया ॥ ४ ॥
अग्नीन्द्ररुद्रशशिमरुदम्बुपतिनिर्ऋतिकालदिक्षु गताः ।
स्वदिशापालकतुल्या ज्वालाद्यास्तास्ततो ज्ञेयाः ॥ ५ ॥
एकादशीचतुर्थ्यो: सा निशि शुक्लेऽह्नि पूर्णिमाष्टम्योः ।
दशमीतृतीययोर्निशि कृष्णेऽह्नि भूतसप्तम्योः ॥ ६ ॥
भूते प्राच्यां प्रथमे साष्टम्यां पावके द्वियामेऽह्नि ।
यमसप्तमीतृतीये देवतिथौ राक्षसेऽन्त्ये च ॥ ७ ॥
[4]प्रागदिशि वरुणचतुर्थ्यां वायौ षष्ठे स्थिता दशम्यां च ।
सौम्येशातिथौ सप्तप्रहरेऽष्टेंऽशे तृतीयान्ते । ८ ॥
विष्टिरहोरात्रान्तात् त्रिंशद्घटिकानुभोगिनीत्यन्ये ।
[6]सा प्रहरभोगिनीति प्राहुर्गर्गादयो मुनयः ॥ ९ ॥

१. 'व्य' क घ. ङ. पाठः. २. 'भृशं प' ख. पाठः. ३. 'का' क. पाठः. ४. 'प्राङ् निशि' ख. ग. पाठः. ५. 'ता तृतीयायाम् । एकादश्यां सौम्ये मुनियामे शाङ्करे दशम्येऽन्त्ये ॥ वि' ङ. पाठः. ६. 'स्यात् प्र' ख. पाठः.

ये तिष्ठन्ति तदग्रे सङ्ग्रामे युद्धकाङ्क्षिणः पुरुषाः ।
सा हन्ति तांश्च सर्वान् हस्त्यश्वरथादिभिर्युक्तान् ॥ १० ॥
सङ्ग्रामे यात्रायां विवाहमङ्गलगृहप्रवेशेषु ।
विद्यारम्भे विद्वान् विष्टिमुखं वर्जयेन्नित्यम् ॥ ११ ॥
नाश्वारोहणकार्यं न कृषिर्न[1] च भोजनं न वाणिज्यम् ।
नच गृहवास्त्वारम्भो[2] न चौलकार्यं च विष्ट्युदये[3] ॥ १२ ॥
ज्वरदाहाद्यं कार्यं ज्वालायोगे न साधकः कुर्यात् ।
द्वाःस्तम्भकीलकाद्यं दृढं करालोदये नोक्तम् ॥ १३ ॥
घोरोदये च घोरं रौद्रीयोगे न शान्तिपुष्ट्याद्यम् ।
चलनादि महाजिह्वायोगे न जयाय कर्तव्यम् ॥ १४ ॥
बडवामुखीप्रयोगे विषापहरणादिकार्यमुद्दिष्टम् ।
विद्वेषाद्यं मार्यां यमजिह्वायां हि मारणाद्यं च ॥ १५ ॥
ईशयमपवनसुरपतिराक्षसशशिपावकाब्धिनिलयेषु ।
प्रथमं प्रतिपच्छुक्ले भ्रमति सदा नित्यविष्टिरियम् ॥ १६ ॥
शशिनिर्ऋतिसुरपमारुतयमहरवरुणाग्निदिक्षु कृष्णे च ।
प्रतिपत्पूर्वं क्रमशश्चरेत सदा नित्यविष्टिरियम् ॥ १७ ॥
इत्येवमाहुरन्ये होराविदुषश्च नित्यविष्टिफलम् ।
तत्स्थानं विजयकरं तद्दृष्टिं वर्जयेत् समरे[4] ॥ १८ ॥
अथ कालचक्रमेतद् वक्ष्येऽहं पूर्वशास्त्रतः सारम् ।
एकाशीतिपदान्वितमुत्कृष्टं सर्वतोभद्रम् ॥ १९ ॥

---

१. 'र्षिं नच' ग. पाठः. २. 'म्भं' क. ख. ङ. पाठः. ३. 'ये । न ज्वरदाहं का' ग. पाठः. ४. 'रे ॥ इति सङ्ग्रामविजयोदये विष्टिचक्रविधिर्नाम द्वादशोऽध्यायः' ङ. पाठः.

भूमितले मृदुशुद्धे निम्नोन्नतवर्जिते मनोरम्ये ।
एकान्ते विगतजने तदालिखेच्चक्रमैन्द्याद्यम् ॥ २० ॥

कोणेषु कला न्यस्त्वा प्राग्दक्षिणपश्चिमोत्तराशासु ।
आग्नेयादियमान्तास्ताराः सम्यङ् न्यसेत् पश्चात् ॥ २१ ॥

अवकहडपञ्चवर्णान् विन्यस्येत् पूर्वपञ्चकोष्ठेषु ।
मटपरतान् याम्यायाः कोष्ठेषु च पञ्च वर्णांस्तान् ॥ २२ ॥

नयबशजान् वारुण्यां गदसचलान् सोमधामकोष्ठेषु ।
अजहरिधनुषः पूर्वे वृषमृगकन्याश्च याम्यायाम् ॥ २३ ॥

मिथुनतुलाकुम्भाख्या वारुण्यां सौम्यगोचरे शेषाः ।
नन्दाभद्राविजयारिक्तापूर्णा[१]श्च पूर्वाद्याः ॥ २४ ॥

यस्मिन् स्थितवान् क्रूरस्तस्माद् रेखां त्रिकर्ण[२]गामृज्वीम् ।
यावत् कोष्ठान्तगतां[३] तावत् सितधातुना च नयेत् ॥ २५ ॥

तत्पुच्छमुखविदेशादानीतां[४]ः कोष्ठवर्णराशिकलाः ।
क्रमशः सम्भेद्य ततः पश्चाद् ब्रूयात् फलावफलम् ॥ २६ ॥

नामस्वरवर्णकला जन्मत्रयराशयश्च यस्यैव ।
क्रूरग्रहदृग्विद्धा मृत्युस्तस्यैव निर्दिष्टः ॥ २७ ॥

शुभविद्धाः पञ्चैते स्वरवर्णकलोडुराशयो यस्य ।
नहि मृत्युः सङ्ग्रामे न व्याधिस्तस्य नार्थहरः ॥ २८ ॥

क्रूराक्रूरविविद्धा रोगो द्रव्यक्षयो वियोगश्च ।
आधानत्रयविद्धं यस्य क्रूरैः स मृत्युगतः ॥ २९ ॥

---

१. 'र्णेति पञ्च विहगाद्याः' ख. पाठः. २. 'र्णयुगमृ' क घ. पाठः. ३. 'तास्ताव' क. घ., 'तां' ख. पाठः. ४. 'त्या' क. ग. .घपाठः.

जन्मभविद्धा व्याधिः कर्मभविद्धाश्च[1] कर्महानिः स्यात्[2] ।
मरणं स्वगर्भताराविद्धाः क्रूरैर्ध्रुवं तस्य ॥ ३० ॥
रविवेधाद् राजभयं शत्रुभयं विग्रहश्च कुजवेधात् ।
रविसुतवेधाद् रोगो निश्शून्यं राहुवेधाच्च ॥ ३१ ॥
गुरुवेधाद् धनलब्धिर्भार्गववेधाद् वराङ्गनासङ्गः ।
शशिसुतवेधात् स्थितिरिह मृत्युः स्यात् केतुवेधेन ॥ ३२ ॥
नामभवर्णकलास्वरराशिषु तिष्ठन्ति यस्य पापाश्चेत् ।
कलहक्षतरुक्पीडाभयप्रदाः स्युर्ग्रहास्तस्य ॥ ३३ ॥
जन्म प्रधानभूतं केचित् प्राहुर्मनीषिणः सम्यक् ।
नामभमस्मिंस्तन्त्रे श्रेष्ठं तस्मात् समुद्दिष्टम् ॥ ३४ ॥
उभयं प्रधानभूतं प्रसूतिनामोद्भवं च नक्षत्रम् ।
इत्याहुर्गर्गोशनसाङ्गिरसाद्याः सदा सन्तः ॥ ३५ ॥
शतपदचक्रमिदानीं समस्ततारांशकादिसम्भूतम् ।
विंशत्यक्षरजातं पञ्चस्वरभेदितं वक्ष्ये ॥ ३६ ॥
एकादशरेखाभिः समालिखेत् तिर्यगूर्ध्वगाभिरलम् ।
प्रागाद्यं शतकोष्ठं विकर्णसन्धिक्र[3]मोपेतम् ॥ ३७ ॥
ईशादिपञ्चकोष्ठेष्ववकहडान् विन्यसेत् क्रमाद् वर्णान् ।
आग्नेयादिषु पञ्चसु मटपरतान् याम्यकोष्ठेषु ॥ ३८ ॥
नैर्ऋत्यादिषु वर्णान् नयबंशजान्[5] पञ्चधामकोष्ठेषु ।
गदसचलान् कौबेर्यां पवनादिषु पञ्चकोष्ठेषु ॥ ३९ ॥

---

१. 'च्च' क. ख. घ. ङ. पाठः. २. 'हीनः स्यात्' ग. ङ. पाठः. ३. 'न्धि क्र' ग. पाठः. ४. 'ग्रहोपे' ख. पाठः. ५. 'भजघान्' ख. ग. पाठः.

पञ्चस्वरैर्विभेद्यं प्रत्येकं सर्वकोष्ठवर्णं च।
यस्मिन्नंशे क्रूरस्तस्मादानीयतां सूत्रम्॥ ४०॥
नामाक्षरांशविद्धं यस्य क्रूरग्रहेण सुबलेन।
न जयस्तस्यास्ति रणे भङ्गो वा मृत्युरुद्दिष्टः॥ ४१॥
बहुभिः पापैर्विद्धो यस्यांशस्तस्य मृत्युराख्यातः।
क्रूराक्रूरविविद्धो व्याधिस्तस्यैव निर्दिष्टः॥ ४२॥
क्रूरग्रहेण विद्धो लग्नांशो यस्य तत्र तन्मृत्युः।
शुभविद्धः सौख्यकरो यस्यांशो जन्मनस्तस्य॥ ४३॥
पुनरन्यद् वक्ष्येऽहं ताराचक्रं समस्तसन्दीपम्।
ऊर्ध्वं नवरेखाभिर्विलिखेत् तिर्यक् त्रिरेखाभिः॥ ४४॥
आग्नेयादियमान्तं भकुलं न्यस्येत् क्रमेण तच्चक्रे।
पश्चात् प्रवदेत् प्रष्टुर्लाभालाभं जयापजयम्॥ ४५॥
उरगरविकेतुरविसुतधरणीसुतविद्धनामतारात्मा।
म्रियते स नरः समरे यदीन्द्रतुल्यो न सन्देहः॥ ४६॥
जन्मत्रयसंविद्धं यस्य क्रूरैर्नरस्य बलवद्भिः।
स विनश्यति सङ्ग्रामे सुरक्षितः शार्ङ्गिणा वापि॥ ४७॥
यस्य विपत्करनैधनपञ्चमताराश्च पापसंविद्धाः।
तस्यैव भवेद् भङ्गो मृत्युर्वा तस्य निर्दिष्टः॥ ४८॥
शुभविद्धं विजयकरं यस्याधानं नरस्य सङ्ग्रामे।
तस्य शुभाशुभविद्धं ग्रहतः कथितं स्फुटं युद्धे॥ ४९॥

---

१. 'र्यं' क. घ. पाठः. २. 'न्वं', ३. 'वेधात् सौ' ख. पाठः.
४. 'तरं य' क. ग. पाठः. ५. 'णापि नरः', ६. 'र्वाथ नि' ख. पाठः

अथ नरचक्रं वक्ष्ये शस्त्राघातप्रबोधनाय[1] ततः ।
आलिख्य पुरुषरूपं नग्नं सर्वाङ्गसंयुक्तम् ॥ ५० ॥

मुखवामनेत्रमस्तकदक्षिणदृक्कण्ठहस्तपादेषु ।
हृद्गलवामकराङ्घ्रिषु नरस्य रणकाङ्क्षिणस्तस्य ॥ ५१ ॥

शशिचन्द्रानलहिमकरशशियुगगुणभूतचन्द्रवेदगुणाः ।
न्यस्तव्यास्तारास्ताः सर्वास्तज्जन्मताराद्याः ॥ ५२ ॥

भौमशनैश्चरभास्करचन्द्रोरगकेतुसंस्थिताङ्गेषु ।
विद्याद् घातं भानौ[2] त्रिपञ्चतारा[3]श्रितस्थाने ॥ ५३ ॥

चन्द्रे प्रधानघातं भौमे रक्तं शनैश्चरे गूढम् ।
ऊर्ध्वं[4] घातं भानौ तिर्यग्घातं च राहुस्थम् ॥ ५४ ॥

यस्योपचयस्थाने सर्वे क्रूराः स्थितास्तु बलवन्तः ।
नहि घातं तस्यैव च शुभेक्षिते यस्य सङ्ग्रामे ॥ ५५ ॥

एकांशगते क्रूरे क्षतमल्पं द्व्यंशके जघन्यं च ।
त्र्यंशगते दृढघातं चतुरंशगते महाविद्धम् ॥ ५६ ॥

त्रिषडेकादशदशमे पापश्चेद् यस्य तस्य नाघातम् ।
यस्यां[5]ङ्गे यदि चन्द्रस्तस्यांशे निश्चयं घातम् ॥ ५७ ॥

सप्तशलाकाचक्रे ग्रहविद्धं यत्र यस्य नक्षत्रम् ।
यदि तिष्ठति तद्घातं प्राहुः केचित् सदाचार्याः[6] ॥ ५८ ॥

---

१. 'योजना' क. पाठः. २. 'नोत्रिप' ग. पाठः. ३. 'रास्थितिः शिरस्थाने ॥' क. पाठः. ४. 'अ र्धघा' ख. पाठः. ५. 'स्यांशे य' क. ख. ग. पाठः. ६. 'र्याः ॥ इति सङ्ग्रामविजयोदये कालचक्रविधिर्नाम त्रयोदशोऽध्यायः । अथ' ङ. पाठः.

अथ कूर्मचक्रमेतत् समस्तभूलोकसंस्थितं सारम् ।
लाभालाभजयाजयसुभिक्षदुर्भिक्षसन्दीपम् ॥ ५९ ॥
सप्तोदधिपर्यन्ता सशैलवनकानना मही येन ।
सन्धारिता च हरिणा गाढं पृथुकूर्मरूपेण ॥ ६० ॥
कूर्मस्य तस्य मानं यद्वेद्[2] भूमिप्रमाणमन्येऽपि ।
कोटिसहस्रं योजनमाहुर्ब्रह्मागमे विदुषः ॥ ६१ ॥
पूर्वमुखश्चतुरङ्घ्रिः स्थितो द्विपक्षो द्विदङ् महापुच्छः ।
आलिङ्ग्य[3] भूमिचक्रं प्रभुः स देवो हरिः कूर्मः[1] ॥ ६२ ॥
पृष्ठेऽस्य मुखे पादे पक्षे चरणे च वालधौ पादे ।
पक्षे चरणे भानि त्रीणि त्रीणि न्यसेत् क्रमशः ॥ ६३ ॥
आग्नेयं ब्राह्मीयं सौम्यं तत्पृष्ठवक्रमध्येषु ।
एवं क्रमेण पूर्वं न्यस्त्वा शेषं न्यसेत् पश्चात् ॥ ६४ ॥
यस्मिन् देशे सौरिः स्थितः स देशो विनश्यति प्रकटम् ।
यैः[4] पश्यति यं देशं रेखासंस्थः स निर्दग्धः ॥ ६५ ॥
दुर्भिक्षं रुक्पीडा परचक्रभयं स्वराष्ट्रराजभयम् ।
अतिवृष्टिरनावृष्टिः पतङ्गशुकमूषिकाः सन्ति ॥ ६६ ॥
यं देशं गुरुशुक्रौ समदृष्ट्या पश्यतश्च तद्देशे ।
धान्यविवृद्धिर्वृष्टिर्निरुजो न च शत्रुराजभयम् ॥ ६७ ॥
यस्मिन् देशे बलिनः पापास्तिष्ठन्ति शत्रुवर्गस्थाः ।
तद्देशे दुर्भिक्षं राजभयं व्याधयो बहवः ॥ ६८ ॥
देशपुरनगरपत्तननिगमग्रामाश्रमाश्रयाः सर्वे ।
क्रूराक्रूरविभागैर्ज्ञातव्याश्चानुपूर्व्येण[5] ॥ ६९ ॥

---

१. 'कूरच' घ. पाठः. २. 'द्य', ३. 'ल्य' क. पाठः. ४. 'यं' क. ग. पाठः. ५. 'गे ज्ञात' ख., 'गो ज्ञात' ङ. पाठः.

अथ पुनरन्यं वक्ष्ये द्वादशकोष्ठे बलाबलव्यक्तम्[1] ।
षड् रेखास्तिर्यक्स्थाः पुनर्लिखेत् तास्त्रयोदशकाः ॥ ७० ॥
षष्टिः कोष्ठाः प्रोक्तास्तन्मध्ये कारणं च संलिख्य ।
अवकहडार्णान् प्रागादिग[2](धः ? तान्) परिकल्पयेत्
[क्रमशः ॥ ७१ ॥

दिग्ग्र[3]हतुरङ्गभास्करर्क्ष[4]त्विजहरपक्षमूर्च्छनास्मृतयः ।
जलनिधिभकालहोरा न्यस्तव्याश्चानुपूर्व्येण ॥ ७२ ॥
नामाक्षरवृन्दाङ्कं विभजेन्मुनिभिः क्रमेण तच्छेषम् ।
आदित्यभौमसौरा बलिनः शेषा ग्रहा त्रिबलाः ॥ ७३ ॥

उभयोर्ग्रहो बुधो यं पश्येद् यदि सन्धिमाहवे स्थितयोः ।
अधिकग्रहनामात्मा विवर्जयेच्छत्रुहीनांशः ॥ ७४ ॥

अधुना कथयामि ततः संक्षेपात् सर्वशास्त्रसारांशम् ।
विदितार्थमायचक्रं जयापजयदीपनं पुंसाम् ॥ ७५ ॥

पूर्वं द्वादशरेखाः *प्रो[7]क्ताश्च ततश्च षड् वक्राः श्लिष्टाः(?) ।
पश्चात् तत्कोष्ठेषु च मन्वाद्याः संलिखेद् व्यक्तम् ॥ ७६ ॥

---

१. 'व्ज्य' ग., 'स्त' ङ. पाठः. २. 'दिदिग' ख., 'दिदिगश्च प' ङ. पाठः. ३. 'ग्भूतर', ग., 'ग्ग्रहतुङ्ग' ङ. पाठः. ४. 'र+त्विश्शरह' ग. पाठः. ५. 'रौर्वभ' ङ., 'द्वा' ख. पाठः. ६. 'स्त्राभ्यम्' ग. घ पाठः. ७. 'प्रोद्धृत्य ततश्च षड् वक्राः श्लिष्टाः' क. ख., 'प्रोद्धृत्य ततश्च षड् वक्राः शिष्टाः' घ., 'प्रोद्धृत्य षड्विधाः शिष्टाः' ङ. पाठः.

---

* छन्दोनुरोधात्तु 'प्रोक्ताः श्लिष्टास्ततश्च षड् वक्राः' इति पाठ्यम् ।

मनुभानुसूर्यतिथिरसयुग[2]नगतलाविष्टनागरन्ध्राणि ।
आलिख्य मन्वधस्ता[3]देखडबवर्णास्ततश्चतुरः ॥ ७७ ॥

कृतनामाक्षरपिण्डं विभजेद् वसुभिः पुनश्च तच्छेषम् ।
विद्यादधिकं विबलं तयोर्द्वयोः पुरुषयोर्व्यक्तम् ॥ ७८ ॥

वायसमण्डलखरवृषकुञ्जरसिंहध्वजाभयः क्रमशः ।
सम्यक् तदुत्तरोत्तरबलाधिकास्ते भवन्ति सदा ॥ ७९ ॥

विबलायो विगतजयो बलाधिकायो बलान्वितः समरे ।
सन्धेयः स समायो विषमायः सर्वदा विजयी ॥ ८० ॥

स्त्रीमित्रराजसेवाग्रामपुरस्थानदेशम[6]न्त्राद्याः ।
आयबलेनैव ततो ज्ञातव्याः शत्रुमित्राणि ॥ ८१ ॥

मात्राभेदं वक्ष्ये जयापजयमित्रशत्रुसन्दीपम् ।
नामाष्टवर्गमानं विख्यातं सर्वलोकेषु ॥ ८२ ॥

एको[7]ऽयं षोडशकः स पञ्चपञ्चाक्षरान्वित[8]ो वर्गः ।
चतुरक्षरसंयुक्तो द्विको[9] भवेद् वर्णसङ्ख्यायाम् ॥ ८३ ॥

तन्मध्यस्थितनाम ज्ञात्वा सङ्गुण्य तद्बलं ब्रूयात् ।
यो यत्र स्थितवर्गः सा संख्या गी[12]यते तत्र ॥ ८४ ॥

नामप्राप्तं रा[13]शिं द्विगुणं कृत्वा नगोद्धृतो राशिः ।
सममात्रा बलदेयं विषमा जयिनी समाख्याता ॥ ८५ ॥

---

१. 'भाष्यासू' ख., 'भाषितसू' ग. पाठः. २. 'नतधा षष्टिना' ख. 'नगतयावि' क. पाठः ३. 'दकारवर्णा' ख., 'दवकहडवर्णाश्च' ग. पाठः ४. 'दा' क. ख. पाठः. ५. 'क्तः', ६. 'मात्राद्याः' ख. पाठः. ७. 'को यः' क. ग. पाठः. ८. 'ते', ९. 'जो', १०. 'याः', ११. 'मानं ज्ञा' ख. पाठः. १२. 'नी' क. पाठः. १३. 'शि' क. ख. पाठः.

मात्राहीने मृत्युः सेवास्त्रीस्थानमित्रभृत्येषु ।
मात्रामहाधिके सति यन्नाम्नस्तस्य[1] विजयः स्यात् ॥ ८६ ॥
सेवाचक्रं वक्ष्ये लाभालाभप्रदं च सर्वेषाम् ।
पूर्वं नाम विदित्वा भृत्ये[2]श्वरवर्णसंख्याभिः ॥ ८७ ॥
कादिहकारान्तं च प्रोद्धृत्यैकै(व ? क)मत्रं[3] मात्राश्च ।
स्वां संज्ञां प्रक्षेप्य च नाम्नो मध्ये तु विंशतिभिः ॥ ८८ ॥
उक्त्वा सं[4] हरेच्छेषं (?) विलक्षयेन्नामवर्णजीवानाम् ।
तत्फलमुभयोर्मध्ये धनमृणमेतत्क्रमेणैव ॥ ८९ ॥
ऋणमिह मात्राहीनं धनञ्च मात्राधिकं ततो ज्ञेयम् ।
फलदो धनेन राजा निष्फलदः स्यादृणेनैव ॥ ९० ॥
पुनरन्यद् वक्ष्येऽहं सेवाचक्रं विशेषतः सारम् ।
लाभालाभजयाजयमित्रामित्रार्थसन्दीपम् ॥ ९१ ॥
न्यस्योर्ध्वं षड्रेखास्तिर्यक्संस्थास्ततोऽष्टरेखाश्च ।
पञ्चत्रिंशत्कोष्ठे पञ्चस्वरकादिहान्तं च ॥ ९२ ॥
संस्थाप्य ततो गण्यात्[5] सिद्धं साध्यं सुसिद्धमरिमरणम् ।
एतेषां यन्नाम प्रयत्नतो[6] लक्षयित्वा तु ॥ ९३ ॥
स्वांशोऽ[7]र्थदो द्वितीयः प्रेष्यो[8] धनदस्तृतीयवर्णांशः ।
प्रीत्यर्थहृच्चतुर्थः स मृत्युदः पञ्चमो ज्ञेयः ॥ ९४ ॥
ग्रामपुरनगरखेटकपत्तनतीर्थाश्रमेषु रम्येषु ।
पञ्चांशेषु[9] वसन्ति हि तेषु म्रियन्ते नरारतेऽपि ॥ ९५ ॥

---

१. 'त्र' ग. पाठः. २. 'त्यैश्वर्यव', ३. 'न्त्र', ४. 'सं', ५. 'ण्या सि', ६. 'प्रियं ततो' ख. पाठः. ७. 'शा' घ. पाठः. ८. 'पोष्यो' क, ख. ग. पाठः. ९. 'श्चाङ्गेषु' ख. पाठः.

स्वामिमित्रपितृभृत्यदारिकाः स्वांशकाः सुफलदायिकाः स्थिरेम्[1]।
स्नेहिताश्च सततामिसेविता मृत्युदाः स्युरपि पञ्चमांशकाः
[॥ ९६ ॥

इति सङ्ग्रामविजयोदये[2]
द्वादशोऽध्यायः ॥

अथ त्रयोदशोऽध्यायः ।

ताराप्रवेशनिर्गमचक्रं वक्ष्यामि शाम्भवात् सारम् ।
समरुचिरभूप्रदेशे समालिखेत् तत्र चतुरश्रम् ॥ १ ॥

अष्टाविंशतिबिन्दून् समालिखेत् तान् महेन्द्रदिक्क्रमशः।
आग्नेयादियमान्तं नक्षत्रौघं न्यसेत् क्रमशः ॥ २ ॥

शक्रयमवरुणशशधरनिलयगतास्ताः प्रवेशताराः स्युः ।
शिखिनिर्ऋतिपवनशङ्करादिक्स्थाः स्युर्निर्गमास्ताराः ॥३॥

अष्टाविंशतितारास्त्रिवलयसंस्थाः प्रवेशगमनाहिताः ।
अभ्यन्तरे चतस्रः सन्ध्यासनसंश्रयाभिहिताः ॥ ४ ॥

निर्गमनैर्निर्गमनं नक्षत्रैश्च प्रवेशनं वेशैः ।
स्तम्भैश्चतुर्भिरासनमक्रूरैरन्वितैर्गूढम्[4] ॥ ५ ॥

प्राकारगोपुरार्गलकवाटपरिघाम्बुभेदनं द्विषताम् ।
स्तम्भैरघटाघातं प्रवेशभैराहवारम्भम् ॥ ६ ॥

लभते प्रवेशनक्षैर्द्रव्यं नष्टं[6] नचात्र निर्गमभैः ।
अन्तर्भेषु न नष्टं दूरगतं बाह्यमण्डलभे[7] ॥ ७ ॥

---

१. 'स्व' ख. पाठः. २. 'राः ।' क. ग. पाठः. ३. 'ये कूर्माय सेवाचक्रविधिर्नाम चतुर्दशोऽध्यायः' ङ. पाठः. ४. 'ता' ख. ङ. पाठः. ५. 'तैर्गाढम्' क. ख. घ., 'तं गाढम्' ग. पाठः. ६. 'ष्टं च नात्र' क. पाठः. ७. 'भैः' ख. पाठः.

उडुरिक्तपूर्णचक्रं प्रागाद्यं यत्तदष्टकुम्भगतम् ।
जीवितमरणोद्दीपं जयलाभं वक्ष्यतेऽद्य मया ॥ ८ ॥
सप्तशलाकाचक्रं संलिख्याग्नेयकादियाम्यान्तम् ।
तस्य शलाकाग्रेषु न्यस्त्वा भकुलं क्रमेणैव ॥ ९ ॥
ऋक्षैस्त्रिभिस्त्रिभिस्तैर्विभज्य कुम्भाष्टकं ततः स्तम्भैः ।
बिन्दुचतुष्कं सद्भिः प्रागाद्यं तल्लिखेच्च क्रमम् ॥ १० ॥
रविणारूढं रिक्तं पूर्णं तस्याग्रसंस्थितं कुम्भम् ।
रिक्तं भयदोषकरं पूर्णं कुम्भं जयं तस्य ॥ ११ ॥
अथ गरुडचक्रमन्यत् तारामयमद्य साधु वक्ष्यामि ।
आदित्यनयोपेतं जयापजयदीपनं सारम् ॥ १२ ॥
मुखकुक्षिवामपक्षप्रदक्षिणपक्षाङ्घ्रिशीर्षनेत्रेषु ।
शशिबाणवेदजलनिधियुगयुगगुणपावकान् न्यस्त्वा ॥
दुःखतरं वक्त्रस्थं जठरस्थं भोगदं द्विपक्षस्थम् ।
धनहरणं पादस्थं करोति मृत्युं च सूर्यवशात् ॥ १४ ॥
आदित्यस्थितमृक्षं वक्त्रे प्रस्थाप्य वैनतेयस्य ।
संगण्य वदेत् क्रमशः फलाफलं जन्मिनामुभयोः[1] ॥ १५ ॥
तदनु ग्रहपीडाख्यं वक्ष्ये चक्रं महेश्वरागमतः ।
शिरसि रविश्चन्द्रोंऽसे वक्षसि भौमो बुधः कट्याम् ॥
गुरु(हृदये ? रुदरे) भृगुतनयः पृष्ठे जङ्घे शनैश्चरो राहुः ।
पादयुगे क्षतपीडां करोति रोगं यदा तत्स्थः ॥ १७ ॥
यन्नामस्वरपिण्डं सप्तस्थाने निधाय तत् पिण्डम् ।
प्रक्षिप्याद्यक्रमशो भगणविशुद्धेषु[2] निलयेषु ॥ १८ ॥

१. 'न्मनाम्' क. ख. ग. घ. पाठः. २. 'पु सप्त निखिलेषु' ङ. पाठः.

तद्वद् राज्ञो[1] नाम्नस्तस्मिन् पिण्डेऽक्षरे[2] (स्य ? ञ्च) संयुज्य ।
सर्वत्र समे लाभो नृपतेर्विषमे च मृत्युश्च ॥ १९ ॥
यद्यस्मिंस्तत्समके स्थाने प्रीतिर्द्वितीयके लाभः ।
असमे मरणं ज्ञेयं भृत्यनिरूपादुपास्ये च[3] ॥ २० ॥
अथ राहुचक्रमाद्यं जयापजयदीपनं ततो वक्ष्ये ।
पञ्चदशर्क्षशरीरं प्रदक्षिणं सञ्चरं च लिखेत् ॥ २१ ॥
शिरसि द्वे स्कन्धे द्वे जठरे वंशे द्विकं च पुच्छे द्वे ।
द्वे तारे तद्बाह्यादधस्त्रयं द्वे तदूर्ध्वस्थे ॥ २२ ॥
उरगालिङ्गिततारास्त्रिपञ्चकास्तत्र दूषिताः शेषाः ।
द्वादश ताराः शुभदाः सर्पस्यालिङ्गदूरस्थाः ॥ २३ ॥
विजयकरमुपरि युगळं कण्ठोदरपुच्छकं त्रयं वधकम् ।
शेषं भयभङ्गकरं दशकं राहोः शरीरस्थम् ॥ २४ ॥
कण्ठगतं पञ्चर्क्षं[4] यदि मृत्युस्तस्य निश्चयो युद्धे ।
कुक्षिगतं पुच्छगतं यस्यर्क्षं तद्वधः समरे ॥ २५ ॥
यद्राहुस्थितमृक्षं शिरसि न्यस्त्वा क्रमेण संगण्य ।
ब्रूयात् तस्य बलाबलमाहवविजयाजयं तत्र ॥ २६ ॥
शिरसि त्रिभानि जठरे चत्वारि हि पृष्ठकेऽपि चत्वारि ।
चत्वारि पुच्छभागे राहुं न्यस्त्वा फलं ब्रूयात् ॥ २७ ॥
प्रविहतचक्षुस्ताराः सकेकराश्चिपिटलोचनास्ताराः ।
दृढनेत्राश्च[5] चतुर्था ज्ञातव्याः शास्त्रतः सम्यक् ॥ २८ ॥

१. 'ज्ञां', २. 'रस्य संयुक्तम् ।' क. ङ. पाठः. ३. 'यम् ।' ग. पाठः. ४. 'वर्ण्यर्क्षं', ५. 'ब' ख. ग. पाठः.

भरणीस्वातिविशाखापुष्याश्लेषाश्विनीमुरघ्नास्ताः ।
दृढनेत्राः ससै(ते ? ता) ज्ञातव्याः सर्वकार्यफलाः ॥ २९ ॥
चित्राषाढपुनर्वसुरेवत्यः केकराश्च निर्दिष्टाः ।
आहिर्बुध्न्यैषाढाहस्तार्द्रास्तास्ततोऽन्धाः स्युः ॥ ३० ॥
आग्नेयसौम्यमूलज्येष्ठावसुरोहिणीमखाजपदः ।
आर्यमभगानुराधाः सवारुणाश्विपिटनेत्राश्च ॥ ३१ ॥
नाडीचक्रं वक्ष्ये स्वजन्मनः सप्तविंशनारोक्तम् ।
यच्च चतुर्लेखाभिर्लिखितं चोर्ध्वं त्रिबिन्दुयुतम् ॥ ३२ ॥
सौम्यत्वाष्ट्रधनिष्ठास्तिस्रस्तस्योर्ध्वबिन्दुसंसृष्टाः ।
अश्विन्यादिक्रमशश्चतुश्चतुःखण्डगणनीयम् ॥ ३३ ॥
यज्जन्मनाडिकायामेकांशगतौ प्रभाकरोर्वीजौ ।
यदि तद्द्रव्यविनाशो राजानलदस्युभयमचिरात् ॥ ३४ ॥
गुणनाडीचक्रमिदं यथा[२] त्रिरेखं लिखेद् भुजङ्गाभम् ।
ऊर्ध्वं बिन्दुचतुष्कं यदष्टखण्डं विचक्रं च ॥ ३५ ॥
गणयेत् सकृत्तिकाद्यं यावत् पौष्णं त्रिकं त्रिकं न्यस्त्वा ।
हरदिनकरजलजोत्तरभद्रचतुष्कं तदूर्ध्वस्थम् ॥ ३६ ॥
एकांशे बुधचन्द्रौ वस्त्रस्त्रीरत्न[३]तौरनाशकरौ ।
गुरुमन्दावेकांशे[४] गतौ[५] च देशक्षयामयदौ ॥ ३७ ॥
राहुसितावेकांशे नाड्यां यदि तिष्ठतश्च बलवन्तौ ।
युद्धं महातिघोरं दुर्भिक्षं जायते राष्ट्रे[६] ॥ ३८ ॥

---

१. 'धना' ख. पाठः. २. 'दा' ग. पाठः. ३. 'कारिना' ङ. पाठः. ४. 'शे भग' ग. पाठः. ५. 'तौ दे' क. ग. पाठः. ६. 'लोके ॥' क. घ. पाठः.

प्राक्पश्चिमनवलेखं दक्षिणसौम्यत्रिलेखमश्वोद्यम् ।
चक्रं त्रिकण्टकाख्यं जीवितमरणप्रदीपं च ॥ ३९ ॥

यद्येकांशे चन्द्रो विषमर्क्षे यस्य पावकस्तस्य ।
मरणं विकलं व्याधिं करोति निधनोद्यमे साक्षात् ॥ ४० ॥

विपदि[2] त्रिपञ्चनाड्यां प्रत्यरे[3] सप्तमे भवेद् गणिते ।
एके च परममैत्रे मैत्र वधकृत् तदंशस्थः ॥ ४१ ॥

प्रागपरसप्तलेखं याम्योत्तरदिक्चतुर्द्विरेखाग्रम् ।
एतत् साधनचक्रं साधु चतुष्कण्टकं नाम ॥ ४२ ॥

जन्मनि कर्मणि गर्भे षष्ठाष्टमयोर्यदीन्दुरास्थितवान् ।
स क्रूरो यस्यर्क्षे करोति मृत्युं क्षणाच्चन्द्रः ॥ ४३ ॥

अंशकचक्रमिदानीमष्टोत्तरशतमपूर्वमृक्षाणाम् ।
वक्ष्ये नष्टद्रव्यं प्रमुष्टिकं नाम चिन्तार्थम् ॥ ४४ ॥

आदित्यभौमभार्गवबुधगुरुशनिचन्द्रमूर्तयः कथिताः ।
अकचटतपयादीनां क्रमशस्ते सप्तवर्गाणाम् ॥ ४५ ॥

उदयाक्षरं च दस्योर्नाम्नः प्रथमाक्षरं तदुद्दिष्टम् ।
हिबुकभवर्णं तदनु द्वितीयवर्णं तृतीयं च ॥ ४६ ॥

जामित्रभवर्णोऽयं खराशिवर्णं चतुर्थवर्णं स्यात् ।
उदये प्रथमो वर्णो येद्यस्तखकण्टकेष्वेवम् ॥ ४७ ॥

---

१. 'न्त्या' ग., 'ध्या' ङ. पाठः. २. 'द्वि' ग. पाठः. ३. 'वेरे स' क. ग. पाठः. ४. 'भ' क. ख. ग. पाठः. ५. 'न्द्रः ॥ इति सङ्ग्रामविजयोदये ताराप्रवेशनिर्गमादिचक्रविधिर्नाम पञ्चदशोऽध्यायः' ङ. पाठः. ६. 'हिबुकास्त' ग. पाठः.

एवं सङ्गण्य बुधस्तस्करनामाक्षरं स्फुटं ब्रूयात् ।
धनपुत्रलाभ[1]निधनं तदुद्गमे तत्र निर्दिष्टम् ॥ ४८ ॥

व्ययसहजषष्ठनवमभवेलायां नष्टवस्तुनामैवम् ।
नक्षत्रं च चतुर्भिर्वर्णैः प्रोक्ताक्षरैर्लग्नम् ॥ ४९ ॥

अष्टोत्तरशतवर्णं नक्षत्रगणं ततः प्रवक्ष्या[2]मि ।
कचट[3]यं अश्विनी अठशख भरणी स्यात् [4]तंपफध कृत्तिका [॥ ५० ॥

गजहर रोहिणीति निर्दिष्टम् (?) ॥

अढझघ मृगशिरा द[5]वंभध शङ्करस्य नक्षत्रम् ।
[6]ऋञणप पुनर्वसु [7]इँहचक पुष्या नर्प[8]पतं[9] आश्लेषा ॥ ५१ ॥

[10]खंहठव मखा [11]ईडगत पूर्वा फल्गुनी ज्ञेया ।
थ[12]बंभद उत्तरा घथ[13]पंश हस्त इत्युक्तः ॥ ५२ ॥

उ[14]डंञण चित्रा [15]थंभमन स्वातीनक्षत्रम् ।
कचशष विशाखा [16]ऊँठछक भवेन्मैत्रम् ॥ ५३ ॥

---

१. 'नभसदुर्गमैत्रेत(?)नि' क. ग. पाठः. २. 'मि । अक', ३. 'त' ग. पाठः. ४. 'सफध' ख., 'पफकृ' ग., 'तपफथ' ङ. पाठः. ५. 'वभेदध श' क. घ., 'भमध श' ङ. पाठः. ६. 'दन्तञलव पु' ग., 'ङञणल पु' ङ. पाठः. ७. 'ळळहक' घ., 'गुहच पु' ग. पाठः. ८. 'व' क. पाठः. ९. 'तम आ' ग. पाठः. १०. 'खजठं म' क. घ., 'खघठध म' ग. पाठः. ११. 'इदडगओ पू' क. घ., 'इधगओ पू' ग., 'ईडजगओ पू' ङ. पाठः. १२. 'बडभ' घ., 'वं' क. ग. पाठः. १३. 'फ' ग. पाठः. १४. 'ङज चि' क. ग. घ. पाठः. १५. 'धमपन' ङ. पाठः. १६. 'ऊठहखभ' ङ., 'औठ छख भ' ग. पाठः.

[1]छडपठ ज्येष्ठा [2]जगदस मूलमित्युक्तम् ।
[3]गडबध पूर्वाषाढा [4]डबमध उत्तराषाढम् ॥ ५४ ॥
[5]जणग श्रावणमेतत् (ए?) तटचक धनिष्ठा स्यात् ।
[6]नवपत शतभिषक् [7]खशरथ पूर्वभद्रपदा ॥ ५५ ॥
[8]इडगज उत्तरा भद्रपदा [9]धफबद रेवती ।
प्रश्नं वक्ष्यामि ततः कैवल्यं सारमत्र संक्षेपात् ॥ ५६ ॥
एकाक्षरा च मुष्ट्या द्वितीयवर्णं स्वसंख्यायाः[10] ।
नष्टे तृतीयवर्णं न[11]वाक्षरैर्जीवितस्य निर्दिष्टम् ॥ ५७ ॥
एवं क्रमेण नित्यं जानीयान्नष्टमुष्ट्याद्याः ॥

आरण्यभूग्रामपयोगिरीन्द्रग्रामा[12]पगाकूपवनाम्बुवारि ।
महार्णवः पूर्वदिशां क्रमेण भवन्त्यजादेर्निलयप्रदेशाः ॥५८॥

आदित्यस्य शिवालयं नवगृहं चन्द्रे कुजे दग्धकं
सौम्ये चित्रगृहं गुरौ सुरगृहं शुक्रे[13]ऽपि चित्रान्वितम् ।
मन्दे शून्यगृहं विगेहमुरगे भग्नं गृहं निश्चयं
केतोः केन्द्रगृहादिषु प्र[14]वरधीर्ब्रूयात् [15]स्थलं शास्त्रतः ॥ ५९ ॥

---

१. 'फथर ज्ये' ख., 'छपठ ज्ये' ग., 'तफबथ ज्ये ङ. पाठः. २. 'जगदध मू' ग., 'शजदड मू' ङ. पाठः. ३. 'गडकश पू' क. घ., 'एढझघ पू' ङ. पाठः. ४. 'दमभध उ' ङ. पाठः. ५. 'ङञणह श्रा' ङ. पाठः. ६. 'पफत' ङ. पाठः. ७. 'खछठफ पू' क. ग. घ., 'खहठळ पू' ङ. पाठः. ८. 'जधनग उ' ग., 'ओडजग उ' ङ. पाठः. ९. 'थबभध रे' ङ. पाठः. १०. 'याम् ॥' क. ग. पाठः. ११. 'वा', १२. 'पणावटककू' ङ. पाठः. १३. 'वि' ग. ङ. पाठः. १४. 'बलधी' ग. पाठः. १५. 'फ' क. पाठः.

भानोः स्थलं शीतकरे जलं च
भौमेष्टका चन्द्रसुते वनानि ।
शुक्रे जलं देवहिते वनं च
मन्दे च रूक्षं वनमुग्रधाम ॥ ६० ॥

चन्द्रगतिचक्रमथ तद् वक्ष्येऽहं पूर्वशास्त्रतः सारम् ।
अष्टाविंशतिकोष्ठं ज्ञेयं तत् कृत्तिकाद्यं च ॥ ६१ ॥

यत्र स्थितः शशाङ्कस्तत्र द्रव्यं स्थितं विनिर्दिष्टम् ।
यस्मिन् ग्रहश्च तस्मिन् क्रूरः शल्यं विनिर्दिष्टम् ॥ ६२ ॥

पञ्चमनवमतृतीये शुभाः स्थिताश्चेद्विनिश्चितं द्रव्यम् ।
नान्यद् द्रव्यं ज्ञेयं तदंशकाच्छल्यमुद्दिष्टम् ॥ ६३ ॥

षष्ठे रजतं राशौ ताम्रं प्रोक्तं झषे तु हेम स्यात् ।
अष्टमचतुर्थयोरपि सौम्येषु च हेमताराङ्कम् ॥ ६४ ॥

तेष्वेव ताम्रलोहं पापतमैरेषु भेषु विज्ञेयम् ।
कार्मुककुळीरमृगझषतुलाधरेष्वेव नास्त्यपि च ॥ ६५ ॥

एवं क्रमेण शल्यंद्रव्यं भूमौ च तत्र विज्ञेयम् ।
पश्यन्त्यजहरिचापा वृषपतिकन्यामृगा याम्याम् ॥ ६६ ॥

अपरां यमकुम्भतुलाः कर्क्यळिमीनाः कुबेरदिग्भागे ।
जङ्घास्थकाळदेशे भार्यात्मजमृत्यवो (द्दि ? दि)ष्टाः ॥ ६७ ॥

जङ्घाप्रमाणघाते शल्यं तत्पूर्वभागकोष्ठस्य ।
शल्यं तदुद्धतास्ते प्रमाणतो विद्यते तत्रे ॥ ६८ ॥

---

१. 'ष्टि', २. 'ल्यं', ३. 'दृधृ' क. पाठः. ४. 'त्र ॥ वक्रात्रिकोणन करद' क., 'त्र ॥ वक्रास्तिकोणेन' ग. पाठः.

[[1]नरकरदण्ड[2]भयं स्याद् ग्र[3]हेऽस्य [4]कैट्यस्त्रकटिमाने ।
[5]अस्ति जकारे [6]हनी हयं याम्ये निर्ऋते[7]श्चाँ [8]स्मितकारे ॥६९॥
हस्ताद् भार्याविनाशः स्याद् बालार्तवरुणदेशे ।
य[9]ता[10]न्तरदेशमादेशं मान्तरभवन्नागे गळनलकम ॥ ७० ॥
[11]गैळमाने भयं दण्डक[12]रे सपदे स्पर्शचक्रम् ।
[13]अंकजजतं य[14]दि संक्ष[15]भंवान्?] ॥ ७१ ॥
प्रागश्विन्या याम्ये मखाक्रमात् पश्चिमेऽनुराधायाः ।
उत्तरदेशे वसुभात् सङ्गणयेत्तमदं(?) समासात्॥ ७२ ॥
मेषाद्यंशकचक्रं साष्टशतं कोष्ठवृन्दमुदिष्टम् ।
गोमूत्रमार्गलिखितं विन्यासं चारवित् क्रमशः ॥ ७३ ॥
राहोरुत्तरफलं सर्वं नाशयेत् तु निशाकरः ।
शुक्रश्चैव गुरुश्चैव तेषां दृष्टिर्युति[16]श्च वै ॥ ७४ ॥
पातेन्दुशुक्रा घटराशिलग्ने मेषे रवौ सौम्ययुते समूज ।
सिंहे गुरौ मन्दिरयोग एष कुर्याद् वृद्धिं श्रीसमास्था-
[पने तु(?) ॥ ७५ ॥

---

१. 'नरकद' क. ख. ग., 'न करद' घ. पाठः. २. 'यदस्य ग्रहेशस्य' ग. पाठः. ३. 'हेशस्य' क. पाठः. ४. 'कर्ध्यास्तकटिर्माने' क. घ., 'कुब्यस्त्रीकटिर्माने' ग. पाठः. ५. 'हस्तज' ङ. पाठः. ६. 'तनीभयं' क., 'जस्तनीभयं' ग. पाठः. ७. 'चास्थित' क. घ. ङ., 'श्चास्थित' ग. पाठः. ८. 'स्त्र' क. पाठः. ९. 'का' क. ग., 'कारान्तरभयं नाभौ गलनलकं कलमाने' ङ. पाठः. १०. 'दशमान्तः भयं नाभेगच्छेकम्' ग. पाठः. ११. 'गुणमाने', १२. 'रे वदेत् गदस्य' क. घ. ङ. पाठः. १३. 'अककज' क., 'अजढतं' ग., 'अर्कजजातं यदसत् क्षभं प्रा' ङ. पाठः. १४. 'दसं कुम्भं प्रा' क. पाठः. १५. 'भं प्रा' ग. पाठः. १६. 'श्च भवेत्' क. पाठः.

स्तम्भस्थापनराशेस्तु तृतीये यदि वै गुरुः ।
तस्य नाशं वदेद् विद्वान् राष्ट्रं चापि विनश्यति ॥ ७६ ॥
दधिभोजनमाग्नेये प्राजापत्ये तु तित्तिरीमांसम् ।
मृगमांसं मृगशीर्षे रौद्रे रक्तं पटोलमतः ॥ ७७ ॥
घृतपायसं च पुष्ये विहङ्गमांसं पयोऽथवाश्लेषे ।
शाल्योदनं मखायामपूपभक्ष्यं च[1] फाल्गुन्याम् ॥ ७८ ॥
गुलमुत्तरफल्गुन्यां यावकभोज्यं च हस्तनक्षत्रे ।
चित्रान्नं चित्रायां स्वात्यामलकं समाख्यातम् ॥ ७९ ॥
इन्द्राग्नौ कुलभोज्यं कुलस्थभक्ष्यं च मित्रदैवत्ये ।
तिलशष्कुलिकं चैन्द्रे मूलर्क्षे मूलकं प्राशयेत् ॥ ८० ॥
[2]कैणबीजपूरकमाप्ये[3] भे गोपञ्चकं च वैश्वदेवत्ये (?) ।
सक्तुं श्रवणे प्राशयेच्छाल्यन्नं तद्धनिष्ठायाम् ॥ ८१ ॥
[4]घृतशष्कुलिं वरुणभे प्रोष्ठपदे मधु पयश्च भाद्रपदे ।
पौष्णे मौद्गं क्षीरं प्राश्यं प्रथमे गुळं याम्ये ॥ ८२ ॥
आज्यतिलौदनमत्स्यक्षीरं प्राश्यं च तत्र पूर्वाद्यम् ।
हस्तिरथाश्वनृवाहाः प्रागाद्या गच्छतो राज्ञः ॥ ८३ ॥
नरतुरगमेषकुक्कुटकपिञ्जलाद्वि[5]पोनियुद्धधामबलम् ।
नक्षत्रग्रहहोरावाराढ्यं तत् प्रवक्ष्यामि ॥ ८४ ॥
द्वन्द्वादीभघटान्तं पञ्चविधं युद्धमाहुरौशनसाः ।
सुरगुरुशिष्याः प्राहुश्चतुर्विधं त्र्यङ्गमन्येऽपि ॥ ८५ ॥

---

१. 'च पूर्वफा' क. पाठः. २. 'तौ पिण्डकपू' क., 'कौपिण्डिजपू' ग. पाठः. ३. 'प्येऽम्भःकोपं च' क. ख. ग. पाठः. ४. 'शष्कुलिकं वारु' ङ. पाठः. ५. 'पद्विपदयु' घ. ङ. पाठः.

प्रथमं च युद्धभूमौ बल्युपहारादि कर्म निर्वर्त्त्य ।
पश्चाद् प्रभातकाले योद्धव्यं स्थायिभिः पूर्वम् ॥ ८६ ॥

कुलनक्षत्रशुभग्रहहोरायबलैः प्रवेशयेत् स्थायी ।
पश्चादकुलैः पापैः प्रवेशयेद् युद्धभूमिं च ॥ ८७ ॥

शत्रोरष्टमराशौ शत्रुवधं तस्य षष्ठभे स्ववधम् ।
यदि रिपुजन्मविलग्नं चतुर्थकं वास्तकं विजयम् ॥ ८८ ॥

बुधगुरुशुक्रैः सुबलैः स्वात्महितैः पूर्वमाहवं गच्छेत् ।
क्षीणेन्दुभौमरविसुतकेतुभुजङ्गैस्ततः पश्चात् ॥ ८९ ॥

स्थानस्थं प्रति यायाद् याता यायिग्रहैर्दृढं सुबलैः ।
पौरैः स्थेयात् स्थायी स्थिरं नृपेन्द्रस्य देशे तु ॥ ९० ॥

नहि यायाद् रणभूमिं हिबुकास्तगते स्वजन्मराशौ वा ।
नहि तुहिनकिरणवाहे नागोग्रसमीरसञ्चारे ॥ ९१ ॥

न्यस्त्वात्मपृष्ठदेशे भुजगाधिपकृष्णरश्मिगर्भेन्दुम् ।
स जयेच्छत्रुमसाध्यं शक्रेण समं क्षणात् समरे ॥ ९२ ॥

विष्टयग्रे ब्रह्मास्त्रे ग्रहयुगमध्ये त्रिशूलवज्रेषु ।
परिघान्ताष्टमराश्योर्नहि तिष्ठेद् युद्धभूचक्रे ॥ ९३ ॥

चन्द्रं दक्षिणभागे वामे भानुं च पृष्ठगं राहुम् ।
न्यस्त्वा स जयेच्छत्रून् सङ्ग्रामे शार्ङ्गिणा सदृशम् ॥९४॥

राशिगतमुरगराजं तात्कालिकमात्मपृष्ठदेशे तु ।
तत्कालिकेन्दुमग्रे न्यस्त्वा[1] स जयेत् रिपुं शीघ्रात् ॥९५॥

---

१. 'दृष्ट्वा स' ङ. पाठः.

परिघालङ्घनमुर्व्यां नहि कुर्यात् स्थानचन्द्रमस्पृष्ठा।
न्यस्त्वात्मपृष्ठमर्कं सद्यः शत्रुं जयेत् समरे ॥ ९६ ॥

पृष्ठेऽथ वामभागे न्यस्त्वा सर्वज्ञचारमनुकूलम्।
चतुरङ्गबलोपेतं स जयेच्छीघ्रं ततः शत्रुम् ॥ ९७ ॥

परिघा सितपक्षेऽहनि वायव्याग्नेयमध्यमे सुस्था।
ईशाननिर्ऋतिमध्ये [illegible]ना च रात्रौ तमेःपक्षे ॥ ९८ ॥

परिघामुल्लङ्घ्य हठाद् ये गच्छन्ति प्रहर्त्तुमधिकबलाः।
परसैन्यं रणभूमौ ते यान्ति यमालयं सद्यः ॥ ९९ ॥

दूरे वाथ समीपे स्वस्य पदस्यैव धाम्नि तन्मध्ये।
परिघेति समाख्याता न लङ्घनीया ततो नित्यम् ॥ १००॥

सद्यः प्रविष्टपादं स्वपं च निर्वर्त्य युद्धभूभागे।
हन्याद् रिपुसङ्घातं गरुड इव व्यालसङ्घातम् ॥ १०१॥

भास्करविष्टिशनैश्चरभूमिजभुजगेन्द्रकेतुगुळिकांश्च।
न्यस्त्वात्मपृष्ठदेशे चन्द्रं वामेतरे न्यस्त्वा ॥ १०२॥

एकेन पञ्च पुरुषा हन्यन्ते पञ्चभिश्च विंशनराः।
विंशतिभिः शतपुरुषाः शतैर्नरैस्ते सहस्राश्च ॥ १०३ ॥

दीपध्वान्तस्थानं ज्ञात्वा तिष्ठेज्जयाय भूभागे।
यस्मिञ् शशी स दीपो यत्र भुजङ्गोऽस्ति तद् ध्वान्तम्
[॥ १०४॥

तत्कालोदितराशिं प्राच्यां वामे द्वितीयराशिं च।
वरुणे तृतीयराशिं सौम्ये च चतुर्थराशिं च ॥ १०५ ॥

१. 'तः' ङ. पाठः. २. 'भटा ये' ग. पाठः. ३. 'श्चतुर्विंश', ४. 'स्तैः स' क. ग. घ. पाठः.

कोणेषु द्वौ द्वौ च न्यस्त्वा सम्यक् क्रमेण भूचक्रे ।
यत्र फणी तत्र जयो यत्रेन्दुस्तत्र मृत्युः स्यात् ॥१०६॥
घटिकाराहुपरिभ्रममुन्निद्रफणीन्द्रधामसंरूढम् ।
परिहृत्य राहुवदनं प्रहरेच्छत्रुं परिभ्रमणे ॥ १०७ ॥
एकनाम नरयोर्द्वयोः सदिक् केचिदाहुरनिशं मनीषिणः ।
वामभानुमुडुपं स्वदक्षिणे ऽस्य पृष्ठभुजगं जयेत् पुमान् ॥

यस्मिन् प्रदेशे समुपैति दैव-
स्तस्मिन् प्रदेशे बलमस्ति सम्यक् ।
तत्र स्थिरं तिष्ठतु युद्धकाङ्क्षी
स शत्रुसैन्यं विजयेदमोघम् ॥ १०९ ॥

पृष्ठे यस्य भुजङ्गविष्टिगुळिकाश्चन्द्रः पुरस्संस्थितो
वामे भूमिसुतार्कपुत्रदिनकृच्छुक्राङ्गिरा दक्षिणे ।
स्थानं कर्तरिवज्रकण्टपरिघादिकशक्तिद्वयवर्जितं
सङ्ग्रामे स जयेद् द्विषं च सबलं हस्त्यादिभिः संयुतम्
[॥ ११० ॥

इति सङ्ग्रामविजयोदये
त्रयोदशोऽध्यायः ॥

अथ चतुर्दशोऽध्यायः ।

चन्द्रशनैश्चरभास्करभौमाङ्गविष्टिकेतुगुळिकेभ्यः ।
अधिकबलमुत्तमोत्तममुदयबलं योगिनीनां च ॥ १ ॥

---

१. 'सौम्यं क', २. 'सरिं के'. ३. 'स' ग. पाठः. ४. 'मण्डप' क., 'मण्डप' ग., 'दण्डप' ङ. पाठ. ५. 'र्तिं' ग. पाठः. ६. 'षड्बलमलं' क. पाठः. ७. 'ये अंशकचक्रयुद्धलक्षणं नाम षोडशोऽध्यायः ॥' ङ. पाठः.

स्वरराशिग्रहरहितं जयप्रदं शत्रुसैन्यविध्वंसम् ।
दुर्विज्ञानं[1]ममोघं स्वसैन्यसंरक्षणं वक्ष्ये ॥ २ ॥

ब्राह्मी वृषभपताका कौमारी वैष्णवी च वाराही ।
इन्द्राणी चामुण्डी योगिन्य[2]श्चाष्टमी महालक्ष्मीः ॥ ३ ॥

पीतधवळासितारुणनीलश्यामाञ्जनाभ्रिवर्णाभाः ।
प्रागुत्तराग्निराक्षसयमाब्धिपवनेशधामस्थाः ॥ ४ ॥

पातालगगनमण्डलसमुद्रबडवाग्निमध्यदेशेषु ।
स्वरतिथिनक्षत्रग्रहराशिद्रेक्काणभागेषु ॥ ५ ॥

गिरिजलवनगहनाश्रमनगरपुरक्षेत्रपुष्पवृक्षेषु ।
मा[3]र्गचतुष्पथसन्धिषु योगिन्यः सञ्चरन्ति सदा ॥ ६ ॥

उद्यन्ते योगिन्यस्तिथिभिः सार्धं समस्तवारेषु ।
प्रागाद्यास्ताः क्रमशो द्विपक्षयोः कालरूपेण ॥ ७ ॥

ब्राह्मी पूर्व[4]दिशायां प्रतिपन्नवमीद्वयेऽपि समुदेति ।
वरुणस्थितसमदृष्टी राक्षसपवनेऽर्द्धदृष्टिश्च ॥ ८ ॥

यो दृष्ट्यग्रे[5] संस्थस्तस्याः समरे महाबलोपेतः ।
स पतेदैन्द्रशिरस्को ब्राह्मीपादद्वये[6] प्रहतः ॥ ९ ॥

दशमीद्वितीययोरिह भुङ्क्ते माहेश्वरी च कौबेर्याम् ।
याम्यार्पिता[7]र्धदृष्टिः समस्तदृष्टिर्निर्ऋतिपावकयोः ॥ १० ॥

अवलोकितर्या दृष्ट्या तस्याः स पतेदुदक्शिराः पुरुषः ।
तस्माद् दृष्टिस्थानं विवर्जयेद् दीर्घजीवी चेत् ॥ ११ ॥

---

१. 'त', २. 'न्योऽष्टौ म' क. पाठः. ३. 'क्षेत्रच' ङ. पाठः. ४. 'नि' ग. पाठः. ५. 'र्धे', ६. 'य' क. पाठः. ७. 'म' ग. पाठः. ८. 'यास्तस्याः' ङ. पाठः.

आग्नेयदिग्विरूढा वायुस्थानावलोकिनी नित्यम् ।
कौमारी प्रविभुङ्क्ते सैकादश्यां तृतीयायाम् ॥ १२ ॥

द्वादश्यां च चतुर्थ्यां नैर्ऋत्यां वैष्णवी ततो भुङ्क्ते ।
ईशानस्थानार्पितसमदृष्टिः क्रूरिणी युद्धे ॥ १३ ॥

चतुरङ्गबलोपेतस्तद्दृष्ट्या विद्धधाम्नि यस्तिष्ठेत् ।
स हतः शत्रुभिरुग्रैः पादद्वन्द्वे पतेत् तस्याः ॥ १४ ॥

पञ्चम्यां मदनतिथौ वाराही याम्यसंस्थितोदेति ।
सौम्येशानसमीरणदिशार्पितसमार्ध[1]दृष्टिश्च ॥ १५ ॥

वारुण्यामिन्द्राणी भुङ्क्ते षष्ठ्यां स्फुटं चतुर्दश्याम् ।
दृष्टिस्तस्याः प्राच्यां रुद्राग्नेयार्धदृष्टिश्च ॥ १६ ॥

यस्तिष्ठेद् दृष्ट्यग्रे बलवांश्चतुरङ्गसंयुतः समरे ।
स पतेद् वरुणशिरस्को महेन्द्रपदद्वये प्रहतः ॥ १७ ॥

आग्नेयदिग्विदृष्टिश्चामुण्डी वायुगोचरे भुङ्क्ते[2] ।
कालेन चोदितायां सप्तम्यां पौर्णमास्यां च ॥ १८ ॥

अष्टम्यामेकतिथौ राक्षसधामावलोकिनी भुङ्क्ते ।
ईशानदिग्विसंस्था समस्तसंहारिणी लक्ष्मीः ॥ १९ ॥

यस्याः परमेश्वर्याः समदृष्टिः पुरस्थितश्च यो युद्धे ।
तस्याः पादद्वन्द्वे स पतेत् तद्भक्षणाय हतः ॥ २० ॥

ब्राह्मी प्रथमं भुङ्क्ते पश्चान्माहेश्वरी च कौमारी ।
चक्रधरी वाराही सैन्द्री चण्डी महालक्ष्मीः ॥ २१ ॥

---

१. 'भ्र' ङ. पाठः. २. 'चरति ।' क. ख. पाठः.

रविचन्द्रभौमबुधगुरुशुक्रार्कजराहुरूपवेषिण्यः ।
उद्यन्ते योगिन्यः पृथक्पृथक्स्तास्तिथिच्छेदे ॥ २२ ॥
एकैकस्याः शक्तेः समे त्रिपादत्रिनाडिका ज्ञेया[1]ः ।
विषमे त्रिपरीताः स्युर्हीनाधिकनाडिकास्तस्याः ॥ २३ ॥
द्वौ प्राणौ दश नाड्यः पञ्चत्रिंशत्प[2]लान्यहोरात्रे ।
भुक्तिर्दिनाधिपायास्तस्यास्तत्रैव[3] योगिन्याः ॥ २४ ॥
प्रत्येकं शेषाणां दिनरजनीमाननाडिकामध्ये ।
एकस्फोटप्र[4]णद्वयं च घटिकाः सप्तसा[5]साम् ॥ २५ ॥
ये तिष्ठन्ति तदग्रे सङ्ग्रामे युद्धकाङ्क्षिणः पुरुषाः ।
सा हन्ति तांश्च सर्वान् हस्त्यश्वरथादिभिर्युक्तान् ॥ २६ ॥
सङ्ग्रामे यात्रायां विवाहमङ्गलगृहप्रवेशेषु ।
विद्यारम्भे विद्वान् दृष्टिगतं वर्जयेत् स्थान[6]म् ॥ २७ ॥

उदयेऽस्तमये निशावधौ प्र[7]विभुङ्क्ते दिवसाधिदेवता ।
दिवसे निशि शेषदेवताः क्रमशो द्विः परिभुञ्जतेऽपराः ॥ २८ ॥

चतुष्प्रभुङ्क्ते तिथिनायकी दृढं
दिवारजन्योर्भुवि योगिनी परा ।
ततस्तु शेषा द्वि[8]रिह प्रभुञ्जते
इति प्रकारं प्रवदन्ति केचन ॥ २९ ॥

इति सङ्ग्रामविजयोदये[9]
चतुर्दशोऽध्यायः ॥

१. 'या ।', २. 'त्फ' क. ख. पाठः. ३. 'क' ख. पाठः. ४. 'प्रमाण' क. पाठः. ५. 'सांशाः' ङ. पाठः. ६. 'ने ।', ७. 'ति', ८. 'रहः', ९. 'ये योगिनीविधानं नाम सप्तदशोऽध्यायः॥' ङ. पाठः.

## अथ पञ्चदशोऽध्यायः।

अथ विजिगीषुपुरस्सररिपुमित्रामित्रदृष्टिसंस्थानाम्[1] ।
बलमिह वक्ष्ये प्रष्टुर्यायिस्थायिग्रहाणां च ॥ १ ॥
विजिगीषुरुष्णकिरणस्तत्सप्तमसंस्थितो रिपुः प्रोक्तः ।
भास्करपृष्ठे संस्थाः पार्ष्णिग्राहादयः सर्वे ॥ २ ॥
तत्पुरतो यातव्यास्तुहिनकरोऽयं भवेत् सदा क्रान्तः[2] ।
सन्धेयश्चन्द्रसुतस्तत्तुल्याः शत्रवस्तेऽपि ॥ ३ ॥
ये बलवन्तो विहगाः[3] सौम्याः क्रूराः स्वजन्मलग्नभयोः ।
तद्विहितकार्यमरिभिः सन्ध्याद्यं वाथ सामाद्यम् ॥ ४ ॥
यायिग्रहैश्च यानं नृपैश्च बलिभिस्तदा च संयुद्धम् ।
अनुकूलैः क्रूरतरैः सौम्यैः सन्धिर्विरोधोऽन्यैः ॥ ५ ॥
साम्नो[4] भार्गवजीवौ दण्डाधीशौ धरात्मजोष्णकरौ ।
दानाधिपः शशाङ्को भेदाः फणिकेतुसौम्यार्क्यः ॥ ६ ॥
दिवसकरादाटविकं सौम्यान्मैत्रं यमाद्[5] भृतश्रेणी ।
कुजशनि[6]जीवादरिभिद्रांहुगतं[7] देशमौल्यं च ॥ ७ ॥
राहुशनैश्चरभूसुतकेतुशशाङ्काश्च यायिनो बाह्याः ।
पूर्वाह्णसूर्यभार्गवजीवबुधाः स्थायिनो[8]ऽन्तस्थाः ॥ ८ ॥

---

१. 'पृष्ठसंस्थानात्' ङ. पाठः. २. 'का' क., 'ता' ग. पाठः, ३. 'हिताः सौ' ख. पाठः. ४. 'म्नौ' क. ग. पाठः. ५. 'मया हृतश्रे' ख., 'यमाद्धृतं' ङ. पाठः. ६. 'शि' ख. पाठः. ७. 'दाँहग' घ. ङ. पाठः. ८. 'नो विजयम् ।' ग. पाठः.

सौरीन्दुसूर्यजीवाः कुलवाराः शुक्रराहुभूमिसुताः ।
अपकुलवाराः प्रोक्ता बुधो भवेदुभयसञ्चारी ॥ ९ ॥
कुलवारे सकुलर्क्षे सङ्ग्रामे स्थायिनो जयं तस्य ।
अपकुलवारे साक्षादपकुलभे यायिनो विजयम् ॥ १० ॥
स्थाय्यागन्तुकयोरिह मूलधनिष्ठेश्वरान्विते सन्धिः ।
बलवति शशिसुतवारे स्तम्भचतुष्कान्विते वापि ॥ ११ ॥
सिंहः कन्या तौलिः कीटः कुम्भो झषश्च सूर्यस्य ।
कर्कटमिथुनौ वृषभो मेषो नक्रो धनुः शशिनः ॥ १२ ॥
दिनकरनिलये दिनकृत् तुहिनकरक्षेत्रगश्च तुहिनांशुः ।
यदि सन्धिर्नहि युद्धं तयोर्द्वयोः[1] संस्थितागतयोः ॥ १३ ॥
दिनकरनिलये हिमकृत् तिष्ठेच्चेत् स्थायिनो जयः समरे ।
हिमकरनिलये दिनकृत् संस्थो यदि यायिनो विजयः ॥
यदि दिनपतुहिनकिरणौ दिवसकरक्षेत्रगौ जयी स्थायी ।
शशिनिलये शशिसूर्यौ यदि संस्थौ यायिनो विजयः ॥
यदि रविधाम्नि शशाङ्को हिमकरनिलये दिवाकरस्तिष्ठेत् ।
युद्धं तयोश्च घोरं नहि सन्धिस्तद् द्वयोः प्रोक्तः ॥ १६ ॥
मित्रोच्चनीचशत्रुस्वक्षेत्राद्यंशकालचेष्टानाम् ।
वीर्यावीर्यमवस्थां ज्ञात्वा ब्रूयाद् ग्रहाणां च ॥ १७ ॥
लग्ने[2]ऽम्बरेऽथ जीवो यदि प्रपश्येत् स्फुटं जयी स्थायी ।
बुधसितरवयो दशमे यदि संस्थाः स्थायिनो विजयः ॥

---

१. 'स्तयोर्द्वयोः' ख. पाठः. २. 'ग्ने बलेऽथ' क. घ. पाठः.

देहादिपञ्चनवमे ते दृश्यन्ते ग्रहाश्च तत्रैव ।
आगन्तुकस्य विजयो भङ्गः स्यात् स्थायिनः समरे ॥१९॥
घटमिथुनतुलाकन्याराशिषु देहादिपञ्चदशमेषु ।
यदि पापोऽस्ति हि बलवान् यायी विजयी भवेत् समरे ॥
उदये पौत्रे नवमे[1] बुधस्त्रिदशमे गुरुश्च यदि तिष्ठेत[2] ।
यायी विजयी भवति स्थायी भङ्गं क्षणाद् याति ॥ २१ ॥
उदये शशाङ्कपुत्रो दशमस्थाने कुंजो यदि स्पष्टम् ।
नहि यायिनोऽत्र विजयः स्थायी विजयी भवेच्छीघ्रम् ॥
भौमो दशमे सौम्यो लग्ने जीवश्चतुर्थसप्तमगः ।
ब्रूयात् प्रष्टुर्विजयं विपरीते भङ्गमाप्नोति ॥ २३ ॥
शत्रुक्षेत्रे जीवो लग्ने सौम्यः कुजोऽम्बरस्थाने ।
प्रष्टुर्न जयो युद्धे विजयः स्याद् यायिनस्तस्य ॥ २४ ॥
दशमे सूर्यशशाङ्कौ चतुर्थजामित्रलग्नगो जीवः ।
यदि पृच्छकस्य विजयः सङ्ग्रामे दारुणे तस्य ॥ २५ ॥
उदयादारूढर्क्षाद् व्योम्नश्चक्रोपरिस्थराशिनयैम्[3] ।
आलोक्य वदेत् प्रष्टुर्लाभालाभं जयापजयम् ॥ २६ ॥
उद्यद्राशेः पूर्वं मेषे संस्थाप्य राशिमुद्गणयेत् ।
वृषभेऽप्यपरं भागं तत्प्रत्यारूढकं पुरुषम् ॥ २७ ॥
चरराश्युदये युद्धं स्थिरोदये नास्ति यस्य सङ्ग्रामः ।
उभयोदयेऽपि कलहं न च युद्धं सन्धिराख्यातः ॥ २८ ॥

---

१. 'नवमे', २. 'गुरुश्च यदि तिष्ठेत्' ङ. पाठः. ३. 'यः' ख. पाठः.

चरराशिगते चन्द्रे चरोदये शीघ्रमाहवं प्रोक्तम् ।
क्रूरोदयेऽपि निधनं शुभोदये जीवितं प्रोक्तम्[1] ॥ २९ ॥
अत ऊर्ध्वमात्मचा[2]रः प्रवक्ष्यते मृत्युजीवितोद्दीपः ।
लाभालाभज्ञानप्रबोधनः सर्वदेहस्थः ॥ ३० ॥
नाभेर्मूले कन्दं स्थितं प्रवालाङ्कुराकृति स्पष्टम् ।
तस्मादुदेति जीवः शिवात्मसोमार्कवह्निमयः ॥ ३१ ॥
शक्तिव्यूहे संस्थो दशवायुसमन्वितः प[3]रः सूक्ष्मः ।
कालानलसंकाशः[4] स्फुरन् सकिरणोऽव्ययो नित्यः ॥ ३२ ॥
ऊर्ध्वाधस्सञ्चारो द्विधा प्रकारेण सोमसूर्यतया ।
यावदुदयास्तकालं तावद् द्वात्रिंशदङ्गुलकम् ॥ ३३ ॥
नाभिहृदयद्विमध्ये यावद् वायुश्चरेद् यदि स्पष्टम् ।
उच्चाटनादिकार्यं तावत् कुर्यात् समाधिस्थः ॥ ३४ ॥
हृत्कण्ठमध्यदेशे यावत् स चरेत् समीरणस्तावत् ।
ज्वरदाहशोषमारणकार्यं कुर्वीत चारज्ञः ॥ ३५ ॥
कण्ठभ्रूमध्येऽस्मिन् वहति यदा वायुरूर्जितो गाढम् ।
शान्तिं पुष्टिं वश्यं तदा प्रकुर्यात् पदे[5]स्थज्ञः ॥ ३६ ॥
भ्रूनासान्तरदेशे समीरणो यावदुद्वहेत् स्पष्टम् ।
तावत् स्तम्भनकार्यं गन्धे लीनात्मकः कुर्यात् ॥ ३७ ॥
द्वात्रिंशन्मातृगणाश्चतुरष्टाम्भोजचक्रमध्यस्थाः ।
सृष्टिक्रमयोगेन स्थिताः पराः सर्वदायिन्यः ॥ ३८ ॥

---

१. 'म् । इति सङ्ग्रामविजयोदये प्रश्नकथनं नामाष्टादशोऽध्यायः । अत' ङ. पाठः. २. 'चक्रं प्र', ३. 'न' घ. पाठः. ४. 'शस्फुरत्करः सङ्कुलोऽव्य' क. ग. पाठः. ५. 'दार्थज्ञः ।' ग. पाठः.

हृत्पद्ममूर्ध्वनालं दशवायुसमन्वितं परं दीप्तम् ।
तन्मध्ये चिद्रूपं वहेत् सदा प्रज्वलं तेजः ॥ ३९ ॥
देवः परमेशानः सर्वगतः शाश्वतो विभुर्नित्यः ।
व्योमव्यापी सूक्ष्मो नादाख्यो मन्त्रको[1] हंसः ॥ ४० ॥
येन व्याप्तं सर्वं तस्य हि चिह्नानि वक्ष्यतेऽद्य मया ।
यदि वहति वामनाड्यामात्मा प्राणः स गन्धस्थः ॥४१॥
हस्त्यश्वरथपदातिध्वजाधिरोहणसुभोगवस्त्राद्यम् ।
आभरणसुगन्धाद्यं स चिन्तयेत् तत्प्रभुः स्थिरया ॥ ४२ ॥
पश्येदग्निज्वालां हेमद्युमणिप्रभां दिवा रात्रौ ।
दहनीशक्तिनियोगात् स पिङ्गलामाश्रितः पुरुषः ॥ ४३ ॥
जृम्भत्यपानयोगाद् रससंस्थः पुष्कलो दिवा रात्रौ ।
विकरोतीन्द्रियसंस्थः स्वप्नावस्थां सदा शक्त्या ॥ ४४ ॥
घोरश्मशानपीठक्षेत्राणि प्रेतयोगिनीव्रातम्[2] ।
यः पश्यति यमदूतान् स्वप्ने च सुषुम्नया मनसा ॥
रौद्रीशक्तिसमेतः समानवायोः समीरितश्चात्मा ।
चिन्तयति रौद्रकार्यं भयाकुलो यत्र वैरिभ्यः ॥ ४६ ॥
पृथुयुद्धमांसशोणितशववायसगृध्रखादनं पश्येत् ।
क्रूराशक्तिनियोगादुदानगौ[3]न्धारिकायु(क्ता ? क्तः) ॥ ४७ ॥
जलशङ्खशुक्तिकमलजमत्स्योपवनानि सम्पश्येत् ।
गजजिह्वावाहेन व्यान(स्था ? स्थः) सौ[4]म्यशक्तिवशात् ॥

---

१. 'हंसको मन्त्रः ॥' ङ. पाठः. २. 'तम् । पश्यति यमस्य दू' ख. ग. पाठः ३.. 'गन्धतो यु' ङ. पाठः. ४. 'सर्वश' घ., 'सा' ङ. पाठः.

उत्पतनगगनभोगं देवचरत्वं रसायनं च रसम् ।
खेगमनसिद्धकन्यासमागमं देशसम्भ्रमणम् ॥ ४९ ॥
पूषानाडीयोगान्नागेन परिप्लुतो मनोवृत्त्या ।
स तु मुद्गलः शरीरे समी[1]हिते चेष्टितं पश्येत् ॥ ५० ॥
धनधान्यवाजिवारणपशुगृ[2]हसङ्ग्रहानिधानहर्म्याणि ।
चिन्तयति निशि दिवा[3]यां कृकरेणात्मा[4](द्वीय)शोनाढ्या ॥
गङ्गादितीर्थयानं श्रीशैलमहेन्द्रविन्ध्यसंसेवाम् ।
वैराग्यतपश्चरणं शिवभजनं मन्त्रसंश्रवणम् ॥ ५२ ॥
कुरुते चेष्टितमीदृक्पूषायामैश्वरीसमायोगात् ।
यदि तत्र देवदत्तो[5] जृम्भति हृदये ततः सम्यक् ॥ ५३ ॥
एवञ्च हृत्प्रदेशे या चेष्टा कीर्तितात्मसंविद्भिः ।
सा बाह्यगगनदेशे द्रष्टव्या तत्त्वशास्त्रज्ञैः ॥ ५४ ॥
[6]नक्षत्रकालहोरा दृष्टादृष्टार्थद[7]र्शिनी साक्षात् ।
सार्कोदयात् प्रगणयेत् क्रूराक्रूरस्थिताः सम्यक् ॥ ५५ ॥
होरा प्राग् गन्धाख्या रसान्विता या द्वितीयहोरा स्यात्
रूपोद्भवा तृतीया स्पर्शाख्या या चतुर्थीयम् ॥ ५६ ॥
गन्धरसाख्या चान्या गन्धाग्नेया च षष्ठहोरेयम् ।
गन्धस्पर्शवतीयं गन्धध्वनिसंयुता चान्या ॥ ५७ ॥

---

१. 'हृ' क. ग. पाठः. २. 'मृगसङ्ग्रामनि' क. पाठः. ३ 'या याकृ' ङ. पाठः. ४. 'त्मन्यशो' क. घ., 'त्मयोगाच्च' ङ. पाठः ५. 'चो हृद्गतिहृदयोनतं स' क. घ. पाठः. ६. 'या तत्र' घ. ङ.' 'यदि तत्र' क. ग. पाठः. ७. 'साधनी' ङ. पाठः.

रसगन्धवती चान्या रसरूपयुता तथा रसस्पर्शा ।
रसशब्दवती होरा सरूपगन्धा ततश्चान्या ॥ ५८ ॥
रूपस्वरा[1] द्विहोरा रूपस्पर्शा सरूप[2] शून्येयम् ।
पवनोद्भवगन्धवती स्पर्शरसान्या मरुद्रूपा ॥ ५९ ॥
चलशब्दवती चान्या ध्वनिगन्धाङ्गी रवाम्बुसंयुक्ता ।
अम्बररूपवतीयं व्योमस्पर्शान्विता चान्या ॥ ६० ॥
एवञ्च कालहोरा नासामार्गे ग्रहान्विताः सर्वाः ।
ज्ञातव्याश्चारज्ञैर्दृढं चतुर्विंशतिश्चारैः ॥ ६१ ॥
धातुर्मूलं[3] जीवो नष्टो मुष्टिर्मृतिर्गतिर्व्याधिः ।
जातिर्लाभालाभौ ज्ञातव्याः कालहोराभिः ॥ ६२ ॥
चन्द्रासितगुरुभूमिजरविभृगुसौम्याश्च कालहोरेशाः ।
पूर्वं वाराधिपतिर्भुङ्क्ते क्रमशस्ततः षष्ठः ॥ ६३ ॥
दिनघटिकाः प्रक्रान्ताः कृत्वा द्विगुणं हरेत् स्वरैस्तं च ।
लब्धो ग्रहश्च तस्माच्चाढ्यः शेषाः समाख्याताः ॥ ६४ ॥
गन्धोदयेऽपि मूलं रसोदये तत्र निश्चयो जीवः ।
रूपस्य धातुरुदये प्रभञ्जने धातुजीवाङ्गम् ॥ ६५ ॥
मिश्रोदयेऽपि मिश्रं धातुर्मूलञ्च जीवसम्बन्धम् ।
जीवो[4] नागे प्रोक्तो मुद्गरचारेण चिन्तायाम् ॥ ६६ ॥
गन्धोदये विनष्टं लभते द्रव्यं न दूरधामगतम् ।
चोरः क्षत्रियजातिः स गौरवर्णो दृढः शूरः ॥ ६७ ॥

---

१., २. 'स्व' ख. घ. ङ. पाठः. ३. 'र्मे' ख. पाठः. ४. 'वो नागः प्रो' क., 'वेनाग्रे प्रो' घ. पाठः.

जीवो रसोदये न तु स लभ्यते तस्करो वणिक् श्यामः ।
रूपेण धातुरुक्तश्चोरो विप्रः स पिङ्गाक्षः ॥ ६८ ॥
स्पर्शो[1] यज्जीवाङ्गः[2] शूद्रश्चोरः[3] स कृष्णवर्णोऽयम् ।
रसगन्धयोर्विमूलं[4] जीवेन समन्वितं द्रव्यम् ॥ ६९ ॥
चोरौ क्षत्रियवैश्यौ पार्थिवरूपोदयेन निर्दि(ष्टम्? ष्टौ) ।
मूलं धातुविमिश्रं चोरौ द्विजभूमिपालौ च ॥ ७० ॥
गन्धसमीरणकाले मूलं जीवांशसंयुतं प्रोक्तम् ।
विप्रचतुर्थौ चोरौ निर्दिष्टौ चारतत्त्वज्ञैः ॥ ७१ ॥
गन्धध्वनिसञ्चारे समूलधातु प्रकीर्तितं द्रव्यम् ।
चोरौ नृपान्त्यवर्णौ चिन्तायां चारतः कथितौ ॥ ७२ ॥
उद्यन्तेऽहनि रात्रौ देहे बाह्ये च कालहोरा याः ।
ताश्चार्धपञ्चनाडीभोगिन्यस्त्वष्ट सङ्ख्याताः ॥ ७३ ॥
सूर्यशनैश्चरभूमिजभुजङ्गमास्ते तु सव्यहोरास्ताः ।
हिमकरसितबुधजीवाः सव्येतरसंश्रितास्तेऽपि ॥ ७४ ॥
वामे होरामेकामाक्रम्य वहेद् यदा हि स श्वासः ।
यस्य परं तस्यायुर्निर्दिष्टं पञ्चविंशाब्दम् ॥ ७५ ॥
गन्धाश्रितो बुधोऽयं वहेद्[5] द्विहोराप्रमाणचारश्चेत् ।
विंशतिवर्षाणि ततः स हि जीवेन्निश्चयं पुरुषः ॥ ७६ ॥
रूपस्थो यदि जीवो वहेत् त्रिहोराप्रमाणसंयुक्तः ।
अष्टादशवर्षाणि च निर्दिष्टानीह तस्यैव ॥ ७७ ॥

---

१. 'र्शे' क. ख. घ. पाठः. २. 'ञ्जी', ३. 'र' क. ग. घ. पाठः, ४. 'नि' घ ; 'नि' क. पाठः. ५. 'वहते हो' ग. पाठः.

होराचतुष्कमनिले स्थिते सितो यस्य चेद् वहेद् गाढम् ।
द्व्यष्टाब्दमानकालं स तु जीवेत् कर्मतो[1] देही ॥ ७८ ॥

चन्द्रेन्दुसुतौ वहतो रसगन्धस्थौ च यस्य नासायाम् ।
होराषट्कोपेतौ चतुर्दशाब्दानि तस्यैव ॥ ७९ ॥

शशिजीवौ रसरूपस्थितौ च वहतो यदीह (त ? य)स्यैव ।
होराष्टकसञ्चारौ त[2]स्यायुर्द्वादशाब्दं च ॥ ८० ॥

चन्द्रसितौ यदि वहतो दशहोराभिः स्थितौ यदि स्पर्शे[3] ।
अष्टौ वर्षाणि ततो विज्ञेयानीह चारज्ञैः ॥ ८१ ॥

बुधजीवौ यदि वहतो द्विसप्तहोराप्रमाणमनवरतम्[4] ।
तौ गन्धरूपसंस्थौ षड्वर्षाणीति जानीयात् ॥ ८२ ॥

बुधशुक्रौ गन्धमरुत्समाश्रितौ यस्य येन वहतश्चेत् ।
वर्षाणि त्रीण्येव हि सद्भिः प्रोक्तानि तस्यैव ॥ ८३ ॥

अष्टादशहोराभिर्गुरुशुक्रौ रूपवायुसंरूढौ ।
यस्य यदा विस्पष्टं तस्यायुर्वर्षमेकं स्यात् ॥ ८४ ॥

वामाचारः प्रोक्तो दक्षिणचारोऽद्य कथ्यते हि मया ।
काले पौष्णे प्राप्ते निरीक्षयेदात्मसञ्चारम् ॥ ८५ ॥

यदि रसहोरारूढो रविर्वहति पञ्चलिप्तमानं च ।
दक्षिणनाड्यां[5] यस्य हि दश मासास्तस्य विज्ञेयाः ॥ ८६ ॥

गन्धारूढो मन्दो दशनाडीभिर्वहेद् यदि स्पष्टम् ।
मासाष्टकमुद्दिष्टं तस्यायुः कर्मतः सद्भिः ॥ ८७ ॥

---

१. 'कालतो' क. पाठः. २. 'य' ख. पाठः. ३. 'र्शेत् ।' क. ग., 'र्शौ' ख. पाठः. ४. 'नुचरतः ।' ख. पाठः. ५. 'ड्यां' ग. पाठः.

रूपस्थो भूमिसुतस्त्रिपञ्चनाडीप्रमाणमत्यन्तम् ।
यदि वहति यस्य सव्ये षण्मासास्तस्य निर्दिष्टाः ॥ ८८ ॥
विंशतिनाडीमानं स्पर्शस्थश्चेच्चरेद् भुजङ्गेशः ।
यस्य त्रिमासमायुः स तु जीवेद् व्याधिना ग्रस्तः ॥ ८९ ॥
रविमन्दौ रसगन्धे स्थितौ यदा पञ्चविंशमानेन ।
वहतो यस्याच्छिन्नं द्वौ मासौ तस्य विज्ञेयौ ॥ ९० ॥
रसरूपगौ कुजरवी त्रिंशन्नाडीप्रमाणसञ्चारौ ।
यदि यस्य सव्यनाड्यामेको मासोऽस्ति तस्यायुः ॥ ९१ ॥
यदि च रसस्पर्शस्थौ पञ्चत्रिंशत्प्रमाणमश्रान्तम् ।
वहतः सूर्यभुजङ्गौ जीवति पक्षं ततो देही ॥ ९२ ॥
चत्वारिंशन्नाडीर्मन्दकुजौ यस्य यत्र यदि वहतः ।
तौ गन्धरूपसंस्थौ दशरात्रं तस्य निर्दिष्टम् ॥ ९३ ॥
मन्दोरगौ च नित्यं गन्धमरुत्स्थौ च पञ्चतालेन ।
यदि वहतो दक्षिणतः पञ्च दिनानीह तस्यैव ॥ ९४ ॥
तेजःपवनारूढौ कुजसर्पौ यस्य यत्र वहतश्चेत् ।
पञ्चाशन्नाडीनां मानं त्रिदिनानि तस्यैव ॥ ९५ ॥
दक्षिणनाड्यां नित्यं वहति यदा यस्य पौष्णकालेऽस्मिन् ।
दिनरात्रिमानमनिलो दिनमेकं तस्य निर्दिष्टम् ॥ ९६ ॥
इष्टानिष्टं कुर्याल्लोके षट्कर्मणां स चारज्ञः ।
समयोगाद् यस्य रविः समं गतस्तस्य वक्ष्यामि ॥ ९७ ॥

---

१. 'का' ख. पाठः.

मन्दे गन्धारूढे स्तम्भं सूर्ये रसं गते तापम् ।
रूपारूढे भौमे मारणमुरगे मरुद्गते चा[2]ल्यम् ॥ ९८ ॥
कार्त्तिकमासे प्राप्ते भौमे भद्रान्विते तथाग्नेये ।
तज्जन्मोदयकाले मृत्युः स्यान्मेषजातस्य ॥ ९९ ॥
मासेऽथ मार्गशीर्षे प्राजापत्ये बुधे चतुर्थ्यां च ।
उन्मादकस्य [3]दोषाद् वृषजातस्यान्तिको मृत्युः ॥ १०० ॥
पौषे मासे गुरुभे सौम्ये षष्ठ्यां च शस्त्रतो वाग्नेः ।
मृत्युरपराह्णकाले मिथुनोद्भूतस्य सम्भवति ॥ १०१ ॥
माघे मासेऽष्टम्यां भृगुवारे पूर्वकालतो व्याधेः ।
नक्षत्रे मृगशीर्षे कुलीरजो मृत्युमाप्नोति ॥ १०२ ॥
फाल्गुनमासि मखायां सिंहे मीनोदये दशम्यां च ।
रविसुतवारे मरणं वनान्तरे सिंहजातस्य ॥ १०३ ॥
चैत्रेऽथ द्वादश्यां रविवारे ब्रह्मभेऽस्त्रतो मृत्युः ।
गुल्मस्य मूलदेशे कन्याजातस्य कन्यायाम् ॥ १०४ ॥
वैशाखे भूतदिने मैत्रे भौमे तुलाजमरणं स्यात् ।
ज्येष्ठे मङ्गलवारे चित्रायां वृश्चिके ध्वंसः ॥ १०५ ॥
आषाढे चैं नवम्यां श्रवणे शुक्रान्विते धनुर्जातः ।
पापोदयोऽपि मृत्युं प्राप्नोत्युग्रायुधैर्युद्धे ॥ १०६ ॥
श्रावणमासे प्राप्ते सप्तम्यां सोमसंयुते पौष्णे ।
सिंहोदयेऽथ नक्रे निधनं समुपैति नक्रभवः ॥ १०७ ॥

---

१. 'समं गते सू' क. पाठः. २. 'बा' क., 'चास्यम्' ग. पाठः. ३. 'दोषो वृ' क., 'रोषे वृ' ग. पाठः. ४. 'तु' क., 'थ' ग. पाठः. ५. 'यात् ॥' ख. पाठः.

भाद्रपदे ज्येष्ठायां कुम्भस्य विनाशनं त्रयोदश्याम् ।
आश्वयुजेऽष्टम्यन्ते रेवत्यां मीनजः प्रहृतः ॥ १०८ ॥

जन्मनि [1]यदि जीवे[2]न्दुस्तिष्ठति षष्ठे[3] तथाष्टमेंऽशे वा ।
यस्य [4]हि जन्मनि साक्षान्मृत्युस्तस्यैव निर्दिष्टः ॥ १०९ ॥

चन्द्राग्निधनं [5]लक्ष्यं लग्नादिन्दुस्ततोऽष्टमे संस्थः ।
यदि पापग्रहदृष्टः क्षिप्रं मरणं भवेत् तस्य ॥ ११० ॥

दशवर्षादपमृत्युस्त्रिंशद्वर्षात् स मेषजातस्य ।
यदि सौम्यग्रहदृष्टः शतमेकं जीवति स्पष्टम् ॥ १११ ॥

वृषजातकालमृत्युः सपञ्चपञ्चाब्दतः समाख्यातः ।
यदि शुभदृष्टः साक्षादशीतिवर्षाणि जीवेत ॥ ११२ ॥

अष्टाविंशतिवर्षान्मिथुनभवस्यापमृत्युराख्यातः ।
सौम्यग्रहदृष्टश्चे[6]दशीतिसंवत्सरं जीवेत् ॥ ११३ ॥

अपमृत्युर्दुर्व्याधिस्त्रिंशद्वर्षात् कुळीरजातस्य ।
नवतिर्[7]वर्षाणि ततो यदि शुभदृष्टो दृढं तस्य ॥ ११४ ॥

यः सिंह(श ? रा)शिजातः स पञ्चत्रिंशापमृत्युजित् पुरुषः ।
जीवति शतवर्षाणि स्थिरं नृपेन्द्राश्रितः सौख्यम् ॥ ११५ ॥

विंशतिवर्षे प्राप्ते शस्त्राघातापमृत्युमपनीय ।
शुभवीक्षितोऽपि जीवति कन्याजातः शताब्दानि ॥ ११६ ॥

---

१. 'कर्मणि जी' ख. ग. पाठः. २. 'दुत्तिष्ठ' ख. पाठः. ३. 'ष्ठमेऽष्टमेंऽशे' ख., 'ष्ठाष्टमे वा' ग. पाठः. ४. 'भ' ख. पाठः. ५. 'लग्नं ल' क. ख. पाठः. ६. 'राज्जीवे' ख. पाठः. ७. 'र्षे जीवेद् य' क. पाठः.

प्राप्ते विंशत्यब्दे व्याध्यपमृत्युं विजित्य शुभदृष्टः ।
पञ्चाशीतिसमानि स्थिरं स जीवेत् तुलाजातः ॥ ११७ ॥
द्वाविंशतिवर्षान्ते मृगापमृत्युं विजित्य जीवेत ।
एकाशीतिसमाश्चाच्छिन्नाङ्गो[1] वृश्चिकोद्भूतः ॥ ११८ ॥
विगतापमृत्युरधिकः षोडशवर्षे तु जीवयेत् पुरुषः ।
नवसप्ततिवर्षाणि प्रभुर्धनुर्जातको धन्यः ॥ ११९ ॥
द्यष्टाब्दादपमृत्युं नीत्वा त्रिंशत्समास्ततो वापि ।
जीवेत् सप्तत्यब्दं शुभेक्षितो मकरसञ्जातः ॥ १२० ॥
विंशत्यब्दे प्राप्ते घटजातस्यापमृत्युरुद्दिष्टः ।
यदि सौम्यग्रहदृष्टः सप्तसप्ततिसमास्तस्य ॥ १२१ ॥
जित्वापमृत्युमुग्रं सप्तदशाब्दे स मीनजातश्च ।
यदि शुभदृष्टः पुरुषो नवतिसमास्तत्र जीवेत ॥ १२२ ॥
जी(वति? वित)मरण[2]ज्ञानं स्वस्थानां रोगिणां च वक्ष्येऽहम् ।
योद्धुमभिकाङ्क्षिणामिह पुंसां सङ्ग्रह[3]परिच्छेदः ॥ १२३ ॥
आयुःपूर्वपरीक्षणमवलोक्य दृढं बलाबलं ब्रूयात् ।
आयुःक्षीणे पुंसामुडुग्रहाः किं करिष्यन्ति ॥ १२४ ॥
सुखदुःखमरणजीवितलाभालाभप्रयात[4]निर्याताः ।
स्त्रीसंयोगवियोगाश्चाराश्चारेण बोद्धव्याः ॥ १२५ ॥
वामे वा सव्ये वा मध्ये प्राणो वहेद् यदि स्पष्टम् ।
तत्स्थाने यस्तिष्ठेत् सङ्ग्रामे तस्य विजयः स्यात् ॥ १२६ ॥

---

१. 'श्च च्छि', २. 'णे' क. ग. पाठः. ३. 'हः', ४. 'ण' ख. पाठः.

जीवी जीवे जीवेच्छून्ये शून्यं सजीवितो[1] जीवेत्[2] ।
ना जीवेत् सङ्ग्रामे न जयी जीवेच्चिरञ्जीवी ॥ १२७ ॥
जीवाच्छून्यं गच्छेद् यद्यपि जित्वा म्रियेत तत्काले ।
शून्याज्जीवं गच्छेत् क्लेशेन नरो जयेच्छत्रुम् ॥ १२८ ॥
जीवे जीवी जीवं त्यक्त्वा युद्धे रिपुं च निर्जीवे ।
स जयेदहितं शीघ्रं शून्यस्थश्चेत् स्वयं शून्यः ॥ १२९ ॥
अग्रे पृष्ठे वाधः प्रश्नं पुरुषः करोति यदि सम्यक् ।
अग्रं दक्षिणसंज्ञं पृष्ठं वामं समाख्यातम् ॥ १३० ॥
संहारे सति मृत्युः सृष्ट्यां सत्यां सुजीवितं पुंसाम् ।
सृष्टिर्भवेत् प्रवेशः संहारोऽयं बहिश्चारः ॥ १३१ ॥
ऊर्ध्वं दक्षिणमेतद् यदधो वामं प्रकीर्तितं मुनिभिः ।
यस्मिन् यस्मिन् जी(वे ? वः) तत्स्थाने जीवितं प्रोक्तम्
[॥ १३२ ॥
व्योम्नि स्त्रीसंयोगे क्षणं वियोगोऽथ मृत्युरस्याश्च ।
योऽधश्चा[3]रे विजयस्तथोर्ध्वचारे[4] मृतिस्तस्य ॥ १३३ ॥
उदये वे[5]श्या धनदा प्रथमे कालेऽनिलप्रवेशस्य ।
वामोदयेऽर्थे[6] मैथुनमत्यन्तं श्रेष्ठदं खे च ॥ १३४ ॥
मध्योदयेऽपि कलहं मिश्रे मिश्रं फलं च तद्वाच्यम् ।
दिवसप्रर्यामघटिकावेलाभिस्तस्य निर्दिष्टम् ॥ १३५ ॥

---

१. 'व' ग. पाठः. २. 'वः ।' ख. ग. पाठः. ३. 'श्चरेद् वि' ग. पाठः. ४. 'रो' क. पाठः. ५. 'प' ख. ग. पाठः. ६. 'पि' क. ग. पाठः. ७. 'मन्त्यस्तच्छ्रेष्ठदुःखे' ख. पाठः. ८. 'माणघ' क. पाठः.

उभयप्रवेशचरणे नागेन सदाहतं नरो गच्छेत् ।
नहि कर्तव्यं यानं शून्याङ्घ्रितलेन बुद्धिमता ॥ १३६ ॥

यस्यादावन्ते वा मात्राहीनं नरस्य यन्नाम ।
स हि भुवि मृत्युं गच्छेद् युद्धे वश्यं विभङ्गं वा ॥ १३७ ॥

यस्यादिमं गुरु स्यान्मात्रारूढं बलाक्षरं नाम ।
स जयेत् समरे साक्षाज्जनार्दनं वापि [illegible]तरम् ॥ १३८ ॥

समनाम वामचारे समाक्षरं यस्य नाम संप्रश्ने ।
स जयेच्छत्रुमसाध्यं राहुरवि[illegible]तः समरे ॥ १३९ ॥

यदि चेद् दक्षिणचारे दृष्टं विषमा[illegible]रस्य योधस्य ।
सोऽवश्यं मृत्युमुखं प्राप्नोतीशेन रक्ष्योऽपि ॥ १४० ॥

विग्रहकाले प्राप्ते शुष्यत्तालुश्च यस्य दिङ्मोहः ।
भ्रान्तः सर्वं पश्यति भङ्गं वा मृत्युमाप्नोति ॥ १४१ ॥

दक्षिणहस्ते स्पन्दं वामे कृष्णं तु लाञ्छनं यस्य ।
म्रियते नहि सन्देहः सुरक्षितः शङ्करेणापि ॥ १४२ ॥

करचरणहृदयकम्पः कर्णे [illegible]णिरुण च पञ्च(?) निस्तेजः ।
नखदशनरोमकेशाः शीर्यन्ते गद्गदं वाक्यम् ॥ १४३ ॥

मुष्टेरस्त्रं पतति स्वाङ्गात् स्वेदो मुहुर्मुहुश्चलनम् ।
नेत्रास्रावं नित्यं स नरो म्रियतेऽथ सङ्ग्रामे ॥ १४४ ॥

---

१. 'चा' क. ग. पाठः. २. 'अ' ख. पाठः. ३. 'श्यमन्तकमु . ग. पाठः. ४. 'रुणरुन्नृपाश्च नि' क., 'रवरणं च नि' ग. पाठः.

---

'रणरणरवश्च' इत्येवञ्जातीयः पाठः स्यात् ।

वामे दक्षिणचारो दक्षिणदे[1]शात्तु वामसञ्चारः ।
यस्य यदा विपरीतं[2]स्तस्यारिष्टं विजानीयात् ॥ १४५ ॥
जीवति सकलं जगदिदमग्नीषोमात्मकं स्वभावाच्च ।
उभयोर्विपर्ययो यदि षण्मासाद् देहभृज्जीवेत् ॥ १४६ ॥

हिमकरबिम्बच्छायां महापथं[3] ध्रुवमरुन्धतीं गगने ।
(सो ? यो)ऽपि न पश्यति सम्यक् षण्मासायुः स विज्ञेयः [॥ १४७ ॥

निर्घातविद्युत्स्फुरणं याम्यायामिन्द्रकार्मुकं रात्रौ ।
दिवसोल्कां यः पश्येत् षण्मासायुः स विज्ञेयः ॥ १४८ ॥

हृद्घोषनासिकाक्ष्योर्दे[4]र्ग्धं जिह्वाभि[5]दर्शनाभावे ।
ये[6]न्त्रश्च घ्राणगुणः शशिसंख्याहा[7]नि च[8] तदायुष्यम् [॥ १४९ ॥

यो हस्तद्वयमध्ये प्रोत्फुल्लाम्बुजमधोमुखं पश्येत् ।
शिरसिस्थकरस्थूलं व[9]र्षं[9]दार्धं तदायुष्यम् ॥ १५० ॥
संस्थाप्य पृष्ठतोऽर्कं स्वच्छायामूर्ध्नि संनिरीक्षेत ।
बा[10]ष्पाद् भ्रमति नहि स्यात् नवदिनमासमायुष्यम् [॥ १५१ ॥

नाभिप्रमाणमम्भः स्वसात्मसन्मोमुखं (?) यस्य ।
तस्यायुरर्धवर्षं जानीयान्निश्चितं ज्ञानी ॥ १५२ ॥

---

१. 'चारात्तु', २. 'तं तस्या' ग. पाठः. ३. 'थ' क. पाठ. ४. 'गधविजि', ५. 'हि' ग. पाठः. ६. 'रन्ध्रश्च' क. ग. पाठः. ७. 'मा' ख. पाठः. ८ 'वत् न' क. पाठः. ९. 'द्यर्धाब्दं त' ख ग पाठः १०. 'ष्पोद्भूति न' क. पाठः.

उद[1]येन्दुसूर्यबिम्बच्छायाकृतिरूपभेदवैकृत्यम् ।
षण्मासं तस्यायुस्तदादिशेदात्मचारज्ञः ॥ १५३ ॥

यो नामार्चिः पश्येत् तस्यायुः स्वल्पमत्र निर्दिष्टम् ।
नागे[2] पुरुषं पश्येद् यदि मासात् तस्य मृत्युः स्यात् ॥
[१५४ ॥

लाक्षारसेन लिप्त्वा हस्ततलद्वन्द्वमत्र पश्येत ।
यत्पर्वणि तद्रागः[3] सं[4]क्षयेत् तत्तिथौ म्रियते ॥ १५५ ॥

गन्धर्वनगरभूतप्रेतपिशाचांश्च हेमवर्णतरून् ।
यः पश्येद् विस्पष्टं दशमासायुः स विज्ञेयः ॥ १५६ ॥

छर्दिं मूत्रपुरीषं सुवर्णरजतं समद्भुतं पश्येत् ।
नवमासायुः प्रोक्तं स्वस्येतरदेहिनस्तथ्यम् ॥ १५७ ॥

कृष्णाधरस्य जिह्वावदनं प्रोत्फुल्लपद्मवर्णाभम् ।
गण्डे पिळका रक्ता यस्यास्ते तस्य मासायुः ॥ १५८ ॥

यस्य दशनप्रकर्षः सवर्णो[5]न्धच्छायागन्धगात्राणि ।
स तु जीवति दशरात्रं न शिरोधूमश्चतुर्मासात् ॥ १५९ ॥

रजनीपीतसमच्छविदन्ताक्षिकराङ्घ्रिशुष्कयो यस्य ।
संभिद्यमानगात्रः स तु जीवेत् सप्तरात्रं च ॥ १६० ॥

नासाक्षुतमत्यल्पं वदने नागप्रबन्धता यस्य ।
करचरणतलस्वेदः स्वल्पायुस्तस्य निर्दिष्टम् ॥ १६१ ॥

यस्य स्वभावविक्रमभोगमलवीर्यबुद्धिपूर्वादेः ।
यदि वैकृतं च सहसा तस्यायुः स्वल्पमुद्दिष्टम् ॥ १६२ ॥

---

१. 'रे' ख. ग. पाठः. २. 'प्रे' ख. पाठः. ३. 'गं' ग. पाठः. ४. 'सपक्षयोस्तत्ति' क. ख. पाठः. ५. 'श' क., 'गन्धर्वच्छा' ग. पाठः.

निजतालुरन्ध्ररूपं नहि पश्येद् यदि यदा स मासायुः।
दि[१]ङ्मोहो विभ्रान्तिर्विज्ञाताज्ञानता मृत्युः ॥ १६३ ॥
ध्वाङ्क्षः शिरसि निविष्टः खादेत् स्वप्नेऽथवापि प्रत्यक्षे ।
यदि धावति भवनोपरि पिङ्गलिका मृत्युरासन्नः ॥ १६४ ॥
यस्य स्थूला जिह्वा दन्ताः कृष्यन्ति तस्य षण्मासाः ।
कण्ठो मुखं च शुष्यति नाभिस्पन्दः स हीनायुः ॥ १६५।
शङ्खावर्तं च भुजे न स्पन्दनमङ्घ्रिगुल्फदेशेषु ।
यो धूपदीपगन्धं नहि जिघ्रति तस्य षण्मासाः॥ १६६ ॥
पूर्वोत्तरदक्षिणदिक्पश्चिमदेशं च गच्छतः पुंसः ।
छाया दक्षिणसंस्था यदि जीवेन्मासमेकं सः ॥ १६७ ॥
यदि वामदक्षिणाभ्यामूनाधिकमाशु सञ्चरेच्छ्वासः ।
यदि पञ्चनाडिकानां तदरिष्टं तस्य जानीयात् ॥ १६८ ॥
यन्नाम कलाहीनं प्रथमान्तिमयोर्भवेद् यदि स्पष्टम् ।
म्रियतेऽवश्यं समरे सुरक्षितः शङ्करेणापि ॥ १६९ ॥
कुन्देन्दुशङ्खतुहिनस्फटिकनिभं द्वादशान्तगं पुरुषम् ।
भूत्वा निमीलिताक्षो वितस्तिमानान्वितं पश्येत् ॥ १७० ॥
अशिर(स्तु ? न्तु) यदा पश्येत् तदा भवेत् तस्य मृत्युर- [[२]त्यन्तम् ।
विभ्रष्टहस्तपादः षण्मासाज्जायते मृत्युः ॥ १७१ ॥
उदयरविबिम्बमध्ये तेजोरूपं सुलक्षणं पुरुषम् ।
न यदा पश्येद् योऽसौ कर्मवशान्मृत्युरस्य तदा ॥ १७२ ॥

---

१. 'द्वि', २. 'भ्य' क, ख. पाठः.

निर्व्याधिः सितवर्णः सितेतरो रोगकृत् कपोताभः ।
कुरुते तत्कुलनाशं विचित्रवर्णः स संहारः ॥ १७३ ॥

करहीनः करबन्धनमनङ्घ्रिरात्माङ्घ्रिशृङ्खलाबन्धम् ।
नानाविधोऽपि मृत्युं करोत्यमोघं चतुर्मासात् ॥ १७४ ॥

दीपाग्रं द्विशिखं द्विधा नवशशी पूर्णेन्दुहीनो जले
पङ्केऽर्द्धं चरणा[१]मम्भसि शकुन्मग्नं शिखी रश्मिमान् ।
शून्याम्भश्च नदीतटाकसरसां स्वप्नेऽपि भङ्गालयं
पातं कर्दमशून्यकूपकुहरे यस्याप्यरिष्टं ध्रुवम् ॥ १७५ ॥

तैलाभ्यङ्गविवस्त्ररक्तकुसुमस्रग्रक्तवस्त्रं वहन्
स्वप्ने कृष्णविलेपनं च वमनं कृष्णाङ्गनामैथुनम् ।
केशोल्लुञ्छनमात्ममुण्डितशिरः पश्येद् विवाहक्रियां
दन्तानां पतनं विरोमनखरा यस्याप्यरिष्टं ध्रुवम् ॥ १७६ ॥

भूतप्रेतपिशाचसूकरखरैर्गृध्रादिभिर्वायसै-
र्गोमायुश्वशिवाकुलैः परिवृतो छागलवङ्गैर्वृकैः ।
यानं तैर्महिषोष्ट्रगर्दभखरैस्तैरङ्गसम्भक्षणं
स्वप्ने यस्य भवत्यरिष्टमधिकं तस्यायुरर्धाब्दकम् ॥ १७७ ॥

आकाशः सुसितच्छविः सुरतियौ निर्लाञ्छनश्चन्द्रमा
मञ्जिष्ठासदृशी धरा च दिनकृद् रश्मिक्षयी तारकाः ।
निर्ज्योत्स्ना विगतच्छविर्मरुगणो दीपो मयूरप्रभो
दृष्टो येन दृढं यदा विधिवशात् तस्यायुरर्धाब्दकम्
[॥ १७८ ॥

१. 'शस्यसि' क. ख. पाठः

उत्थानः समदृग् विलम्बितकरः कृत्वा रविं पृष्ठतः
स्वच्छायागळमध्यदेशमवनौ किञ्चिद् विलोक्य स्थिरम् ।
पश्चात् खे विमले विनष्टजलदे पूर्वे[1]ऽपराह्णेऽथवा
रूपं वैकृतमुत्तमाङ्गरहितं पश्येदवश्यं मृतिः ॥ १७९ ॥

सम्पूर्णावयवश्चिरायुरकलं रूपं क्षतं निश्चयं
धूम्रं व्याधिकरं सितं शुभकरं रक्तं हिरण्यप्रदम् ।
पीतं ब्रह्मपशुघ्नमन्यजनने स्त्रीघ्नं पिशङ्गच्छवि-
र्नानावर्णमनूनवापिकलुषं द्रव्यापहारि ध्रुवम् ॥ १८० ॥

भानोर्मण्डलमप्सु कृष्णजलदच्छायोपमं निष्प्रभं
यः पश्येत् स तु याति कालवदनं त्रिंशद्दिनाभ्यन्तरे ।
निम्नन्यूनके[2]लं कलङ्ककलुषत्रासैरमासङ्गमे
षण्मासान्म्रियते विधौ[3] स हि नरो रोगेण[4] शस्त्रेण वा ॥

याम्याप्यसौम्यप[5]रभास्करमण्डलो[6]भं
मध्येऽन्तरं बहलधूमयुतं च मासैः ।
अन्तर्जले यदि विलोकयते स षट्त्रि-
द्व्येकैर्दशाहमथवैकदिनं म्रियेत ॥ १८२ ॥

इति सङ्ग्रामविजयोदये पञ्चदशोऽध्यायः ॥

---

१. 'र्वा' क. पाठः. २. 'त' ख. ग. पाठः. ३. 'धैः' क., 'धे' ख. पाठः. ४. 'योगेन श' क. पाठः. ५. 'पु' क. ग. पाठः. ६. 'लोदङ्मध्ये' क., 'ले भं' ख. पाठः.

## अथ षोडशोऽध्यायः।

अथ कालचक्रमेतद् वक्ष्ये स्वायुःपरीक्षणं सम्यक् ।
काले पौष्णे प्राप्ते निरीक्षयेच्चारमुदयाद्यैः ॥ १ ॥

समसप्तगते सूर्ये स्वजन्मनक्षत्रसंस्थितश्चन्द्रः ।
पौष्णः कालः साक्षाद् भवत्यसौ नान्यथा लोके ॥ २ ॥

विषुसंस्थे दिवसकरे जन्मर्क्षेन्दुर्भवेत् स पौष्णोऽयम् ।
गुरुमि(त्रे ? त्रौ) धनुषि हरौ निवसन्तौ यदि च पौष्णो-
[ऽयम ॥ ३ ॥

हृत्पद्ममूर्ध्वनालं द्वादशपत्रं भवेदधोवक्त्रम् ।
मेषादिराशिसहितं दक्षिणवामान्वितं सौरम् ॥ ४ ॥

मृत्युर्द्विविधो ज्ञेयः कालाकालाश्रितो नृणां लोके ।
अर्वाङ्मृत्युरकालः शतायुषः कालमृत्युः स्यात् ॥ ५ ॥

तस्य द्विविधस्या[2]र्कात् समीक्ष्यते कालवञ्चना सद्भिः ।
अपमृत्योः पूर्व[3]मेताश्चिह्नं कालस्य वक्ष्यामि ॥ ६ ॥

[4]तुठ्याद्यङ्गः कालः स च द्विधान्तर्बहिस्थितः सर्वः ।
अर्कप्राणस्थितया गत्यार्कात् का[5]लयत्येषः ॥ ७ ॥

राशौ कर्कटकेऽर्के काले सुपरीक्षयेद् दिवा चार[6]म् ।
मकरस्थे दिवसकरे परीक्षयेद् दक्षिणायां च[7] ॥ ८ ॥

---

१. 'भूपद्म', २. 'स्यापिच स' ख. ग. पाठः. ३. 'तम-श्चिह्नः का' क. ग. पाठः. ४. 'क' क. ख. पाठः. ५. 'प्राणय' ग. पाठः. ६. 'रम् । वामे' क. ख. पाठः. ७. 'च ॥ राशौ कर्कटके-ऽर्के परीक्षयेदात्मसञ्चारम् । वा' ग. पाठः.

वामे वामपरीक्षा दक्षिणनाड्यां च तत्परीक्षा स्यात् ।
मध्ये मध्यपरीक्षां कुर्यात् सम्यङ् मरुच्चारे ॥ ९ ॥

वातव्याधिविकाराच्छ्लेष्मविकाराद्जीर्णदोषाच्च ।
शयनासनाभिघाताद् विपरीतचरो भवेच्छ्वासः ॥ १० ॥

समकायासनविष्टः समदृङ् मौनी समाधिनिर्द्वन्द्वः ।
शु[2]द्धोपवास्यनिद्रः परीक्षयेदात्मसञ्चारम् ॥ ११ ॥

विधिविहितायुःपुंसः समे न दोषोऽस्ति पञ्चनाडीनाम् ।
आधिक्ये विपरीतो हीने दोषश्च सञ्चारे ॥ १२ ॥

ब्रह्माङ्गधातुवसुरन्ध्रदिशादिनाङ्घ्रि-
त्रिंशद्द्विमासनयनानलसागरेषु ।
वेदाङ्गमङ्गलदिशारविपञ्चविंशत्-
पुंदेववर्णसुकलापदशाब्दै[3]पञ्चाः ॥ १३ ॥

भूताशातिथिविं[4]शतस्त्वपुरुषज्यो[5]तिर्मनुर्विघ्नहृ[6]त्
त्रिंशन्मासपदोत्तरत्रिदशकं द्वात्रिंशदिन्द्रादिभिः ।
वह्निद्वीन्दुरसाग्निनेत्रहिमकृन्मासार्द्ध[7]दिक्सायक-
त्रि[8]द्व्येकास्थितजीवितस्य च समा[9] मासा दिनादिक्रमात् ॥

पञ्चदशान्तरतिथयो दशार्द्धतोया[10]त्रिपञ्चमान्तै[11]स्थाः ।
विंशत्यब्दे[12] तिथयः षोडश संशोधनीयास्ताः ॥ १५ ॥

---

१. 'श' ग. पाठः. २. 'द्धोपवासनि' क., 'द्धोऽपास्तनि' ख. पाठः. ३. 'त्र' ग. पाठः. ४. 'वं' क. ग. पाठः. ५. 'तिम्मनुद्विशिस्तु मूर्विंश' क. पाठः. ६. 'क्रु', ७. 'द्द' ग. पाठः. ८. 'त्रि', ९. 'मादायादि', १०. 'नि', ११. 'च' क. पाठः. १२. 'र्वे' ख. ग. पाठः.

सम्पूर्णो भवति सदा सर्वगतः सर्वकृत् प्रभुर्नित्यः ।
संशोधितोऽपि कालः सुभागहारः क्रमेणैव ॥ १६ ॥
प्रथमद्वितीययोश्च द्वासप्ततिवृद्धिभागहारोऽयम् ।
षट्त्रिंशच्च षडर्धे चतुर्थके[1]ऽष्टादश प्रोक्ताः ॥ १७ ॥
षष्टित्रिदशादिनानि त्रिगुणं कृत्वैकपिण्डि[2]तैप्राणै[3]म् ।
स हरेद् द्वासप्ततिभिः पुनर्भजेत् षष्टिभिस्त्रिशतैः ॥१८ ॥
अब्दास्ते तल्लब्धाः शेषास्त्रिंशद्भिरुद्धृता मासाः ।
तच्छेषाणि दिनानि ज्ञातव्यान्यात्मसंविद्भिः ॥ १९ ॥
षष्ठीमारभ्य ततश्चतुर्दशीं यावदत्र संशोध्य ।
विहरेद् द्वासप्ततिभिः प्रथमोत्तरवृद्धिसंगुणितैः ॥ २० ॥
एकस्यां यदि नाड्यां वहति मरुत् षड्दिनानि यत्सत-
तम् ।
द्वे वर्षे नव मासा दिनानि चाष्टादशोक्तानि ॥ २१ ॥
सप्त दिनानि समीरो वहति तदा चेन्निरन्तरं नाड्याम् ।
वर्षत्रयमुद्दिष्टं मासाः सप्तात्र षड् दिवसाः ॥ २२ ॥
अष्टमदि(ना ? नेऽ)ब्दयुगलं मासचतुष्कं च तस्य नि-
र्दिष्टम् ।
दिवसा होरासङ्ख्याः साक्षात् तस्यायुषः सङ्ख्याः ॥२३॥
नवमेऽहनि वर्षे द्वे मासौ द्वौ तस्य तत्र रविदिवसाः ।
दशमेऽब्दयुगळमेतन्निर्दिष्टं तस्य जीवस्य ॥ २४ ॥

---

१. 'भे' ग. पाठः. २. 'तः प्रोक्तम् ।' क. पाठः. ३. 'तम्' ख., 'णः ।' ग. पाठः.

एकादशैकवर्षं नव मासास्ते[1] पतिर्दिनानां च ।
द्वादशदिनेऽब्दमेकं मासाः सप्तैव षड् दिवसाः ॥ २५ ॥
वर्षं मासचतुष्कं त्रयोदशाहे[2](पु ? तु) तत्र मनुदिवसाः ।
एकोऽब्दो द्वौ मासौ द्वादशदिवसाश्च भूतदिने ॥ २६ ॥
(वर्षं च चतुर्मासास्त्रयोदशेऽस्मिन् दिवाश्चतुर्विंशाः ।
एकोऽब्दो द्वौ मासौ द्वादशदिवसानि भूतदिने ॥
पञ्चदशदिवसवारे दक्षिणनाड्यां समीरणस्यैव ?)
पञ्चदशदिवसवारे दक्षिणनाड्यां समीरणो यावत् ।
एकाकारेण घनं तस्यायुर्वर्षमेकं च ॥ २७ ॥
षोडशदिनमारभ्य च यावद्विंशं मरुद् भवेत् तावत् ।
षष्टि[3]त्रिंशद्दिनानां[4] षट्त्रिंशद्भिर्विशोध्य पुनः ॥ २८ ॥
त्रिंशद्भुक्तविलब्धा मासास्ते स्युर्दिनानि शेषाणि ।
पश्चात् तद्द्विगुणांस्तैः षट्त्रिंशद्भिर्विशोध्योर्ध्वम्[5] ॥ २९ ॥
षोडशदिनदशमासा दिनानि हो(रा ? रो)पलक्षितानीह ।
*सप्तदशनवमासा[6] दिनानि चाष्टादश प्रोक्ताः( ? )॥३० ॥
अष्टादशदिनचारे ह्यष्टौ मासा दिनार्कसंख्येयम् ।
एकोनविंशचारे मासाः सप्तात्र षड् दिवसाः ॥ ३१ ॥
विंशतिदिवसे वायुर्वहति यदा यस्य देहिनो नाड्याम् ।
षण्मासास्तस्यायुःप्रमाणसंख्या मया प्रोक्ताः ॥ ३२ ॥

---

१. 'स्ते दिना' क., 'स्ते प्रतिदिने च' ग. पाठः. २. 'ब्दे' ख. पाठः. ३. 'षट्त्रिंशद्दशदिना' ग. पाठः. ४. 'दि' क. पाठः. ५. 'यम्', ६. 'ष्ट' क. ग. पाठः.

---

* 'सप्तदशे नवमासा दिवसाश्चाष्टादश प्रोक्ताः' इति पाठः स्यात् ।

अत ऊर्ध्वं षण्मासांस्त्रिगु(णञ्चा? णांश्चा)ष्टादशेन सं-
[शोध्य ।
विभजेत् तत्त्रिंशद्भिर्लब्धा मासास्ततो दिवसाः ॥ ३३ ॥
मासाः पञ्च द्वादश दिनानि तस्यैकविंशतिश्चारे ।
द्वाविंशतियुगमासास्तस्य चतुर्विंशतिर्दिवसाः ॥ ३४ ॥
युगमासाः षड्दिवसास्तदा त्रयोविंशतिप्रचारेण ।
अष्टादशदिनमासास्त्रयश्चतुर्विंशचारेण ॥ ३५ ॥
मासास्त्रयो भवन्ति हि चारेऽस्मिन् पञ्चविंशके नित्यम् ।
अत ऊर्ध्वं प्राक्कथितं पौष्णे कालस्य चक्रेऽस्मिन् ॥ ३६ ॥
अथ बाह्यपरीक्षणमप्यन्यं कालस्य निर्णयं सारम् ।
स्वस्थानां पुरुषाणां वक्ष्ये स्वस्थेतराणां च ॥ ३७ ॥
सव्यापसव्यतो[1]ऽब्जं शतपत्रं[2] शब्दराशिभेदेन ।
अथ मालिनीविभेदाः शतायुषो विप्रविन्यासः ॥ ३८ ॥
पञ्चाशद्दलमम्बुजमादिक्षान्तैरनुक्रमेणैव ।
पञ्चाशदब्दमायुः पुंसां सुपरीक्ष्यते चक्रे ॥ ३९ ॥
कादिचतुर्विंशतिभिर्भान्तैर्वर्णैरनुक्रमेणैव ।
तत्रास्य चतुर्विंशतिसंख्यायुः प्रोक्तमत्रैव ॥ ४० ॥
प्रणवो हंसो वाद्यस्तुम्बुरुदेवोऽथ कालबीजं वा ।
तन्मध्ये सम्पूज्य स्रगादिभिर्गन्धधूपैश्च ॥ ४१ ॥
सितघटिकालेखन्या कुमारिकाहस्तदत्तया मृद्व्या ।
गोमयलिप्ते गुप्ते भूमितले शुद्धदेशे तु ॥ ४२ ॥

---

१. 'योऽयं श' क. पाठः. २. 'त्रमब्जरा' ख. पाठः.

सलिलरसदर्पणार्चिषि सुगन्धपुष्पैः प्रधूपदीपाद्यैः ।
संपूजयेत् सुबीजं[2] भोज्याद्यैस्तर्पयेत् सम्यक् ॥ ४३ ॥
नाश्नन् शयीत शुद्धः प्रभातकाले ततो निरीक्षेत ।
तच्चक्रवर्णरा(शि ? शे)र्नष्टानष्टच्युतच्छायाम् ॥ ४४ ॥
अङ्कक्षयेऽपि हानिं पूर्णे पूर्णायुराहुराचार्याः ।
कृष्णे मरणं ज्ञेयं शुक्ले पुष्टिं भयं धूम्रे ॥ ४५ ॥
रक्तक्षतं च विकृते सौम्ये सौम्यं विभीषणे कलहम् ।
फलभेदः संप्रोक्तो वर्णाकृतिभेदतः सकलम् ॥ ४६ ॥
गन्धाम्बुशरावस्थाः सृष्टा मृद्गोलकाश्च तावन्तः ।
संलिखितगर्भकास्ते सुपरीक्ष्याः पूजिताः सम्यक् ॥ ४७ ॥
यद्गोलकं विशीर्णं तद्वर्षे मृत्युमादिशेन्मतिमान् ।
दीपो वान्तः स्थाप्यस्तच्छान्तौ तद् भवत्येव ॥ ४८ ॥
विज्ञाताब्दः पुरुषः पश्चान्मृतिमाससंपरीक्ष्यात्मा ।
चक्रं द्वादशजीवैः[3] संलिख्य ततः परीक्षेत ॥ ४९ ॥
विज्ञातमाससंख्यं चक्रं तिथिबोधनाय संलिख्य ।
सव्यापसव्यमार्गान् कृत्वा विद्यान्निजां च तिथिम् ॥५०॥
यामावबोधनार्थं[4] याष्टैरष्टारकं लिखेच्चक्रम् ।
घटिकावबोधनाय च तदेव पुनरीक्ष्यते चक्रम् ॥ ५१ ॥
साक्षाच्छेता[5]दिघटिकाविनाशकालात्मकाभिसंसिद्ध्यै ।
विधिरेष हि संप्रोक्तः स्वस्यापि चरस्य[6] वा तन्त्रे ॥ ५२ ॥

---

१. 'स्व' ग. पाठः. २. 'विजयं भो', ३. 'जं चेत् सं' क. पाठः. ४ 'र्थायाष्टेरष्टाष्टकं लि' ग. पाठः. ५. 'च ता घ' ख. पाठः. ६. 'परस्य पातेन ॥' क. पाठः.

नियतानियतत्वेन द्विविधमरिष्टं प्रकल्पितं मुनिभिः ।
विद्यान्नियतमवञ्च्यं तथेतरेद् वञ्चनीयं च ॥ ५३ ॥
यस्मिन् मासि मुहूर्ते श्वासो विनिवर्तितः स्फुटं यस्य ।
तस्मिन् मासि मुहूर्ते तस्य तदन्ते मृतिर्ज्ञेया ॥ ५४ ॥
कालज्ञानं सम्यगाख्यातमिष्टमन्त्रतश्चारात् ॥ ५४[1] ॥

इति सङ्ग्रामविजयोदये षोडशोऽध्यायः ।

ज्योतिषभागः समाप्तः ॥

## अथ सप्तदशोऽध्यायः ।

अथ वक्ष्ये मृत्युजयं स्वजन्ममासे तु कृष्णपक्षस्य ।
अष्टम्यां शुचिदेहस्तमर्चयेद् देवमीशानम् ॥ १ ॥
क्षीरदधिमाक्षिकाज्यैर्गन्धैः पुष्पैः सचन्दनैर्बहुभिः ।
संपूज्य मन्त्रपूतैः[2] पश्चान्मन्त्रं लिखेद् धीमान् ॥ २ ॥
अजरामरलेखन्या भूर्जतले[3] शोभने समे शुद्धे ।
प्रतिमामधोवलम्बितहस्तां च लिखेत् स्वरक्तेन ॥ ३ ॥
अष्टाक्षरवर्गान्तं बीजान्यष्टौ समुद्धृतान्यत्र ।
तैर्बीजान्वितविद्यां मृत्युघ्नां ब्रह्मसंभूताम् ॥ ४ ॥
सान्तं चरणद्वन्द्वे लान्तं जङ्घाद्वये पवर्गान्तम् ।
कट्यां धान्तं नाभौ[4] तथा स्तनयुगे ढकारान्तम् ॥ ५ ॥
ज्ञान्तं वामे हस्ते घान्तं वामेतरे शिरोऽकारः ।
स्वं नाम हृदयमध्ये संलिख्य सुपूजयित्वा तु ॥ ६ ॥

---

१. 'रं' क. ग. पाठः. २. 'तं' ख. पाठः. ३. 'घ' ग. पाठः.
४. 'भौ स्तनयुग्मे तङ्का' ख. ग. पाठः.

दर्भप्रस्तरणेऽस्मिन् स्वपेद् बुधो मन्त्रितोऽथ तस्याग्रे ।
प्रातःकाले सम्यङ् निरीक्षयेद्धीनवर्णं च ॥ ७ ॥
अष्टाब्दौ[1]ऽष्टममासे चौ[2]ष्टतिथौ चाष्टयामसम्प्राप्ते ।
षष्टिघटिकान्तकाले मृत्युः शून्याक्षरे शून्ये ॥ ८ ॥
लान्ते शून्ये सर्वे सप्तमवर्षादिकं फलं विद्यात् ।
भान्ते षट् स्यात् सर्वं धान्ते पञ्चाख्यकं सर्वम् ॥ ९ ॥
ढौ[3]न्ते शून्ये चत्वार्यादि च झौ[4]न्ते तृतीयकं सर्वम् ।
घान्तेऽक्षरे च विद्यात् सर्वं द्वौ पूर्वके चैकम् ॥ १० ॥
लान्ते सप्त समाः[5] क्षयेऽपि च लये षड्वत्सरा नै[6]क्षये
पञ्चाब्दा णलये समुद्रगणना झौन्ते त्रयो वत्सराः ।
घान्ते द्वे तु कला[8]न्तिमे क्षयं[7]गते वर्षे[9] तदेकं ध्रुवं
ह्ये[10]वं वत्सरमासयामघटिकावेलासु मृत्युर्भवेत् ॥ ११ ॥
तामष्टाक्षरविद्यामष्टोत्तरशतै[11]जपेन नासाग्रे ।
अभिमन्त्र्य च सम्पश्येन्नासाग्रगतिं न पश्येत ॥ १२ ।
तन्मृत्युरष्टदिवसे भवति तदा विष्णुरक्षितस्यापि ।
विज्ञातव्यो मृत्युर्मुद्गलचारे स्वचारज्ञैः ॥ १३ ॥
अथ वक्ष्येऽन्यच्चिह्नं मृत्योः पुरुषस्य कालसञ्जातम् ।
द्वादशवर्णैर्ज्ञेयं क्षयाक्षयं द्वादशाब्दानाम् ॥ १४ ॥

---

१. 'घो' ग. पाठः. २. 'वा' क. पाठः. ३. 'झा', ४. 'सा', ५. 'मर्क्षये विलये' ग. पाठः. ६. 'त्र' क. पाठः. ७. 'सा', ८. 'के', ९. 'प', १०. 'ए' ग. पाठः. ११ 'तं जपेत् स ना' क. पाठः.

पूर्वस्य पूर्ववर्णः पञ्चमवर्णान्तिमो द्वितीययुतः ।
पश्चाल्लकारवर्णः पिङ्गलशब्दस्ततो युक्तः ॥ १५ ॥
ज्वलितः पश्चाद् युक्तो लोहितशब्देन पूर्णितो मन्त्रः ।
द्वादशवर्णाख्यातः सर्वेषामुत्तरं सिद्धिः ॥ १६ ॥
द्वादशदलमम्भोजं भूर्जे स्वस्यारुणेन तत्र लिखेत् ।
मध्ये स्वनामसहितं शरावयुग्मेन सम्पुटितम् ॥ १७ ॥
प्रातःकाले पश्येद् यन्त्राक्षरहीनमच्युतं सम्यक् ।
हीनाक्षरेऽपि मृत्युः प्रथमान्तादिक[1]माब्दसङ्ख्यासु[2] ॥ १८ ॥
पञ्चाशद्वर्णौघं फलकायां स्वात्मरक्तरोचनया ।
आलिख्य पौर्णमास्यां प्रातः पश्येत् क्षयं पूर्णम् ॥ १९ ॥
एवं परीक्ष्य सम्यक् पश्चात् कालस्य वञ्चनं कुर्यात् ।
ध्यानजपमन्त्रयोगैः करणैः श्वासैः प्रयोगज्ञः ॥ २० ॥
अम्भोरुहमष्टदलं सकर्णिकं केसरान्वितं भूर्जे ।
तन्मध्यगमात्मानं साध्याक्षरदर्भितं पश्चात् ॥ २१ ॥
प्रणवं प्राग्वारुण्यां जूङ्कारं राक्षसेशपत्रस्थम् ।
मायां दक्षिणसौम्ये सः कारं वायुतेजस्थम् ॥ २२ ॥
बाह्ये षोडशपत्रं षोडशबी[3]जैर्विदर्भितं पश्चात् ।
द्वात्रिंशत्पत्राढ्यं द्वात्रिंशद्वर्णकं पश्चात् ॥ २३ ॥
बाह्येऽथ गुह्यशक्तिगमनु त्रिधा मायया च संवेष्ट्य ।
कुङ्कुमगोरोचनया लिखेच्छुभं मृत्युहृद् यन्त्रम् ॥ २४ ॥

---

१. 'मन्त्वादि' ख. पाठः. २. 'स्युः' क. ख. पाठः.
३. 'जीवैर्वि' ग. पाठः.

शुभशालिपिष्टलिङ्गं कृत्वा तस्मिन्निधापयेद् यन्त्रम् ।
तत् पूजयेत्[1] स नित्यं ब्रह्मायुस्तस्य निर्दिष्टम् ॥ २५ ॥
आत्मानं सम्पुटितं कृत्वा नित्यं जपेन्महामन्त्रम् ।
मासान्निहन्ति मृत्युं तस्यायुर्वर्धते प्रचुरम् ॥ २६ ॥
भक्ष्यं भोज्यं पानं लेह्यं चानेन मन्त्रितं कृत्वा ।
भक्षयतु निर्विषत्वं भवति तनोर्वर्धनं नित्यम् ॥ २७ ॥
संवेष्ट्य सिक्थकेन[2] हि निधापयेत् क्षीरकुम्भमध्येऽस्मिन् ।
तद्घटमगाधवारिणि निधापयेद् यावदायुष्यम् ॥ २८ ॥
सरसिजसरसि च तोयं प्रविश्य कण्ठप्रमाणमुपवासी ।
एनममावास्यायां रात्रौ मौनी जपेदयुतम् ॥ २९ ॥
अथवा नदीह्रदान्ते तटाकमध्येऽथैवा[3] महावाप्याम् ।
स्थित्वा जपेदनन्तं मृत्युं जित्वा चिरं जीव्यात् ॥ ३० ॥
दर्वीकराहिमण्डलिराजिललूताखुदष्टविषं हन्यात् ।
तद्धारणया सर्वं घोरविषं निर्विषं सद्यः ॥ ३१ ॥
धारयतु बाहुशिखरे सङ्ग्रामे दुर्गराजचोरभये ।
अटवीमृगसङ्कीर्णे समुद्रतरणे भयस्थाने ॥ ३२ ॥
अमृताख्या पूर्वयुगे माहेयी सा परा समाख्याता ।
त्रिपुरविजयीति पश्चात् ख्याता सञ्जीविनी विद्या ॥ ३३ ॥
पवनव्यापृतयत्नाद् वायुजयः स्यात् ततश्च मृत्युजयः ।
यदि तिष्ठति हृद्वायुः प्रहरादायुश्शतं ज्ञेयम् ॥ ३४ ॥

---

१. 'येदनुदिनं ब्र' ग. पाठः. २. 'तिक्तके' ख. पाठः. ३. 'पि' क. पाठः.

ऊर्ध्वाधोनिश्चारो[1] हल्लीनो निष्कलः परः श्वासः ।
मृत्युजयकृत् समस्तव्याधिध्वंसी भवेद् व्याप्तः ॥ ३५ ॥
हृदये स मनः कृत्वा निश्चलमाकाशकल्पमन्तरस्थम् ।
निरुपाधिमला[2]लम्बं मृत्युजं[3]य(न्त ? स्त)त्क्षणेनैव ॥ ३६ ॥
रेचकपूरकयुगळं त्यक्त्वा हृत्पुण्डरीकमध्येऽस्मिन् ।
तिष्ठेदन्तः स्वस्थः मृत्युजयः स्यात् प्रयोगोऽयम् ॥ ३७ ॥
हिमकरचाराभ्यासाद् दीर्घायुर्मृत्युवञ्चना भवति ।
अल्पायुरुष्णदीधितिचाराभ्यासात् क्षणेनैव ॥ ३८ ॥
चित्तं नासाग्रे च प्रक्षिप्य ततः स्वयं च यदि तिष्ठेत् ।
वायुजयः स्यादथवा बिन्दुस्थाने निरोधजयः ॥ ३९ ॥
रसनाग्रे[4]घण्टिकाग्रस्थिरबन्धनहंसचारसंरोधैः[5] ।
मासान्निहन्ति साक्षादायान्तं कालमृत्युमपि ॥ ४० ॥
कालनिरोधः श्वासस्थाने[6]निरोधः क्षणेन पुरुषस्य ।
श्वासनिरोधाभ्यासादल्पायुर्दीर्घमायुः स्यात् ॥ ४१ ॥
वज्र[7]नळकान्तराळे नाड्यां तिष्ठेन्मनोरथेनैव ।
यावच्चन्द्रादित्यौ तावज्जीवेत् समाधिस्थः ॥ ४२ ॥

क्षीरार्णवे लक्षसहस्रपत्रे
श्वेताम्बुजे मध्यमकर्णिकेन्दौ ।
तस्मिन् प्रविष्टः सितमेघवृष्टे-[8]
धाराप्लुताङ्गः शशिचारसक्तः ॥ ४३ ॥

---

१. 'त्पी' ख. पाठः २. 'ना' ख. ग. पाठः. ३. 'ञ्जय तत्क्ष' ख. पाठः. ४. 'ग्रे घटिका', ५. 'धात् ।' क. पाठः. ६. 'ने रो' ग. पाठः. ७. 'ज्ञानाळ' ८. 'स तु मेघपृष्ठे धरा' ख. पाठः

पद्मद्वयेन्दुद्वयमध्यसुस्थः
शिरश्शशाङ्कामृतबिन्दुसिक्तः ।
नासासुषुम्नान्तरचित्तवृत्ति-
र्मृत्युं जयेदागतमर्धवर्षात् ॥ ४४ ॥

आकाशामृतधारा स्वशिरोरन्ध्रप्रवेशिनी शुद्धा ।
आप्लाव्यान्तःकायं भवति बहिश्चाप्लुतापमृत्युहरा ॥ ४५ ॥

रन्ध्रान्तविद् बिन्दुमहामृतौघं[1]
सम्पूरितं स्वात्मशरीरसंस्थम् ।
अन्तर्बहिःस्थं सततं सुचित्तः
सञ्चिन्तयेन्मृत्युजयाय धीरः ॥ ४६ ॥

नाडीचक्रे विद्रुतेन्दुद्र(सा ? वा)भा
तारैर्भाया[2] या द्रवत्यन्तरस्था ।
या[3] रोमभ्यो निर्गता व्याप्तबाह्या
हन्यात् साक्षात् कालमृत्युं त्रिमासात् ॥ ४७ ॥

चुम्बाकारेणास्ये[4] नाभिविरन्ध्रेण खाम्बुधेर्धीमान् ।
आकर्षेदमृतौघं शीतं मृत्युञ्जयाय सदा ॥ ४८ ॥

हृत्[5]स्वोदरसंयोगे प्रवृत्तयोगो[6]ऽपमृत्युविजयाय ।
गमनागमनच्छेदः[7] परमावस्थाव्य[8]वस्थानम्[9] ॥ ४९ ॥

नील[10]ग्रीवहृदि स्वयं स्थिरगतो मृत्युञ्जयाय ध्रुवं
चामुण्डीहृदये गतोऽथ मनुजो दुर्गाहृदिस्थः स्वयम् ।

---

१. 'घ', २. 'द्राद्दा या' ख. पाठः. ३. 'यारोमध्यो नि' क., 'योरोमध्यो नि' ख. पाठः. ४. 'श्वा' ख. पाठः. ५. 'हस्वेतर क. ग. पाठः. ६. 'ग', ७. 'पि', ८. 'दस्फुरणाव' क. पाठः. ९. 'प्य' १०. 'लीनग्री' ख. पाठः.

कालाग्नेर्हृदि वा स्थितोऽभिनिरतस्तद्ध्यानयुक्तो नरः
संजीयादथ नारसिंहहृदये कालं जयाय स्फुटम् ॥ ५० ॥

इति सङ्ग्रामविजयोदये सप्तदशोऽध्यायः ॥

## अथाष्टादशोऽध्यायः ।

अथ यन्त्रविधिं वक्ष्ये नानाबीजाक्षरांशसङ्कीर्णम् ।
विविधग[1]णजातियोनिस्थानग्रहकालवेलोक्तम् ॥ १ ॥

द्रव्योपाद[2]नसाधनमण्डलचिह्नाधिदै[3]वसंयुक्तम् ।
क्रूराक्रूरविभागध्यानाकारप्रयोगयुतम् ॥ २ ॥

पृथिवीजलदहनमरुद्व्योम्नां बीजानि पञ्चभेदानि ।
पञ्चाशदक्षराणां मध्ये मन्त्रेषु नान्तानि ॥ ३ ॥

ब्रह्मेन्द्ररुद्रराक्षसगरुडोरगयक्षदैत्यभूतानाम् ।
गन्धर्वासुरकिन्नरकिम्पुरु[4]षैपिशाचसिद्धानाम् ॥ ४ ॥

पञ्चदशांशाः ख्याताः शेषाः संमिश्रजाश्च पुरुषाणाम् ।
केचिद् दशाष्टभेदं प्राहुर्मन्त्रांशकं विदु[5]षैः ॥ ५ ॥

द्व्यक्षरयोगेनोक्ता कर्तरिका त्र्यक्षरैर्भवेत् सूची ।
वर्णचतुष्कं मुद्गरमाहुर्मुसलं च पञ्चमकम् ॥ ६ ॥

[6]षट्कं शृङ्खलमेतत् क्रकचं सप्ताक्षरं त्रिशूलं च ।
अष्टाक्षरमिति वज्रं नवाक्षरं शक्ति[7]दशकं च ॥ ७ ॥

१. 'गु' ग. पाठः. २. 'ल' ख. ग. पाठः. ३. 'द' क. ख. पाठः. ४. 'षाणां पि' ग. पाठः. ५. 'षाम्' क., 'षा' ग. पाठः. ६. 'छं' क. ग. पाठः. ७. 'मं' ख. पाठः.

एकादशकं परशुर्द्वादशवर्णैर्भवेदिदं चक्रम् ।
एवं रञ्जकभेदैर्भेद्यः सर्वप्रयोगेण ॥ ८ ॥
मन्त्रच्छेदनकार्ये कर्तरिका भेदने च सा सूची ।
प्रतिभञ्जने च मुद्गरमुरुमुसलं क्षोभणे प्राहुः ॥ ९ ॥
शृङ्खलमुग्रविबन्धे घाते शूलं च बन्धने पाशम् ।
अङ्कुशमाकर्षेऽस्मिन् द्वेषे परशुः समाख्यातः ॥ १० ॥
वज्रं स्तम्भनकार्ये नाराचः सैन्यभेदने योज्यः ।
कुलिशं त्रयोदशयुतं सन्धानमभित्रकार्येषु ॥ ११ ॥
स चतुर्दशवर्णोक्तो नाराचः स्यात् स मुण्डिकाख्यातः ।
पञ्चदशाक्षरयुक्तः षोडशवर्णो भवेत् कमलम् ॥ १२ ॥
अन्ते स पल्लवः[1] स्यादाद्ये योगो[2]ऽन्तमध्यमादौ[3] च ।
रोधो ज्ञेयः साक्षादाद्यन्ते सम्पुटं प्रोक्तम् ॥ १३ ॥
वर्णान्तरितो ग्रथनः[4] सविदर्भो द्व्यक्षरान्तरान्तरितः ।
एवं षट्कर्मविधौ कर्तव्यो मन्त्रिणा मन्त्रे ॥ १४ ॥
मारणविषसंहारे ग्रहभूतपिशाचनिग्रहे द्वेषे ।
उच्चाटनादिकार्ये कर्तव्यः पल्लवो येन ॥ १५ ॥
दीपकशान्तिकपौष्टिकवशीकरणनिर्भू[5]षिककार्येषु(?) ।
अमलीकरणे[6] मोहे[7] प्रायश्चित्ते भवेद् योगः ॥ १६ ॥

---

१. 'वे स्या', २. 'गा' क. ख. पाठः. ३. 'मोऽन्ते च' ख., 'मान्ते च' ग. पाठः. ४. 'नं' ख. पाठः. ५. 'मैलिक' क., 'मैलक' ग. पाठः. ६. 'ल', ७. 'णे च मो' क. पाठः. ८. 'लिखेद् योगम् ।' ग. पाठः.

मन्त्राभिमुख्यकरणे सर्वव्याधेर्विनाशने घोरे।
ज्वरहरणविषभयाद्ये कर्तव्यो मन्त्रिणा रोधः॥ १७॥

स्तम्भनरक्षणबोधनमृत्युजये सम्पुटो[1] भवेद् दिव्ये[2]।
परमन्त्रभेदकार्ये ग्रथनः संरोधने प्रोक्तः॥ १८॥

छेदनताडननिग्रहविद्याहरणेऽतिपातने स्तोभे।
सविदर्भः कर्तव्यो रौद्राद्यो मन्त्रिणा मन्त्रः॥ १९॥

बो[3]धनदीपनतापननिग्रहरोधा मलीकरणच्छेदाः।
आप्यायनेन चाष्टौ समस्तमन्त्रक्रियाभेदाः॥ २०॥
सन्दीपे विद्वेषे चलने सन्ताडने च हुङ्कारः।
फट्कारो विच्छेद्ये हुंफड् विघ्ने ग्रहे पाते॥ २१॥
आप्यायने च पुष्टौ वषट्पदं बोधने[4] बलीकरणे।
सञ्छादनार्चनायां नमोऽग्निकार्ये जपेत् स्वाहा॥ २२॥
स्वाहास्वधावषट्पदबहुलं(ष?फ)डुंफट् क्रमेण संयोज्यम्।
शान्तिकपौष्टिकवश्यद्वेषाकृष्टिभ्रमध्वंसे॥ २३॥
आकर्षणतापज्वरवश्ये स्वाहापदं प्रयोक्तव्यम्।
क्रोधोपशमनशान्तिप्रीतिषु योज्यो नमस्कारः॥ २४॥
मृत्युञ्जयसम्मोहनपुष्टिसमुद्दीपनेषु वौषड्भ्यां[6]म्।
छेदनमारणकार्ये हुङ्कारः प्रीतिनाशे च॥ २५॥
उ[7]च्चलने विद्वेषे वषट्प्रयोगोऽन्धके सफट्कारः।
मन्त्रोद्दीपनकार्ये लाभालाभे वषट्कारः॥ २६॥

---

१. 'टे' क. ख. पाठः. २. 'व्यैः।' क. पाठः. ३. 'यो' क. ग. पाठः. ४. 'ने च बलिक' ग. पाठः. ५. 'व'; ६. 'भ्यः', ७. 'ज्ज्व' ख. पाठः.

जपहोमार्चनसाधनमिह नहि सिद्धिः स्वजातिहीनाच्च ।
तस्माज्जातिं ज्ञात्वा नियोजयेत् सर्वकार्येषु ॥ २७ ॥
ताडनदीपनभेद्यच्छेदनसंरोधनेन्धनेत्यादि ।
संयोजयेत् समस्तप्रचण्डमन्त्रेषु सर्वेषु ॥ २८ ॥
वश्यं वसन्तकाले विद्वेषोच्चाटनं निदाघे च ।
प्रावृषि शान्तिं पुष्टिं मारणमुद्यच्छरत्काले ॥ २९ ॥
शिशिरे स्तम्भनमेतद्धेमन्ते प्राहुरुद्यतां तुष्टिम् ।
यच्चान्यच्छुभकार्यं कुर्यान्मन्त्रस्य हेमन्ते ॥ ३० ॥
पूर्वो वसन्तकालो मध्याह्नं ग्रीष्ममाहुराचार्याः ।
अपराह्णं प्रावृट्कं सन्ध्याकालः शरत् प्रोक्तः ॥ ३१ ॥
पूर्वो वसन्तकालो मध्याह्नोष्णश्च वृष्टिरपराह्णः ।
कालः शरत् प्रदोषः शिशिरोऽर्द्धनिशा च शेषोऽन्त्यम्
[॥ ३२ ॥
द्विविधो मन्त्रो ज्ञेयः क(ल्पा ? ल्पोऽ)कल्पश्च सर्वकार्येषु[2] ।
एकाक्षरमारभ्य च षोडशवर्णान्तिकं कल्पः ॥ ३३ ॥
तस्योर्ध्वो मालाख्यो मन्त्रः कैल्पस्य[3] कल्पिता सिद्धिः ।
उत्तरसिद्धिरकल्पे[4] स हि कल्पस्योन्वितो[5] भेदः ॥ ३४ ॥
पिण्डो बीजं ख्यातं पिण्डः स्यात् पञ्चभूतसंयुक्तः ।
बीजं जीवसमेतं ताभ्यां युक्तो मतो[6] मन्त्रः ॥ ३५ ॥

---

१. 'प' ग. पाठः. २. 'शास्त्रेषु' क. ख. पाठः. ३. 'कालस्य कल्पना सि', ४. 'म', ५. 'स्वान्वितात्र भेदाः', ६. 'नो' ख. पाठः.

पिण्डो बीजं मन्त्रं त(त्र ? न्त्रं) यन्त्रं च पञ्चधा भिन्नम् ।
पिण्डोऽनुच्चार्यः स्यादुच्चार्यं बीजमत्रैव ॥ ३६ ॥

एकाक्षरो द्विबीजो बहुवर्णो वा भवेत् ततो मन्त्रः ।
तन्त्रं द्रव्यादियुतं मन्त्रेणालेखितं यन्त्रम् ॥ ३७ ॥

भेद्योऽभेद्यः पिण्डो द्विविधः परिकल्पितः सदाचार्यैः ।
आद्यक्षरादिमायायुक्तं हेढोरको भेद्यः ॥ ३८ ॥

आद्यन्तमध्यवर्णैर्मण्डलमध्ये विभेदितोऽभेद्यः ।
भूम्यम्बुदहनमरुतां स्वमण्डलस्थेषु कूटानाम् ॥ ३९ ॥

उच्चाटनं ध्वजाग्रे विद्वेषं रासभाजिने स लिखेत् ।
स्तम्भनमिभस्य चर्माणि वश्याकृष्टिं च भूर्जतले ॥ ४० ॥

मारणसन्तापज्वरकार्यं प्रेताम्बरे शिलायां च ।
सेनास्तम्भनमोहनजल्पविवादादिकार्यं च ॥ ४१ ॥

ध्वजमण्डले(कं ? के) स्तम्भनमुच्चाटनमग्निगोचरे शान्तिः।
गजवृषभमण्डलेऽस्मिंस्तापनमरणादिकं सिंहे ॥ ४२ ॥

ध्वाङ्क्षे निग्रहकलहौ विद्वेषो मण्डले च कर्तव्यः ।
खरधाम्नि कुलोत्सादो ब्रह्मस्थाने शुभं कार्यम् ॥ ४३ ॥

मारणमहिरक्तेन तु विद्वेषं कालरौद्ररक्तेन ।
विषरक्तेन तु[2] मोहनमुच्चाटनमुष्ट्ररक्तेन ॥ ४४ ॥

वश्यं गोरोचनया हरिद्रया स्तम्भनं च तापेन ।
असृजाप्यनामिकायाँ[3] वनिताकृष्टिः प्रयोक्तव्या ॥ ४५ ॥

---

१. 'न' क. पाठः. २. 'च', ३. 'या' क. ग. पाठः.

चलने विद्वेषे सति कलेन खटिका निरास्थि चात्मवेधे(?)।
वश्ये दूर्वाखण्डं शिखिपिञ्छमया सदाकृष्टौ ॥ ४६ ॥

वृषसिंहकुम्भवृश्चिकवेलायां स्तम्भनं लिखेद् यन्त्रम्।
नक्रतुलाजकुलीरे विद्वेषोच्चाटनादिकं कार्यम् ॥ ४७ ॥

यमभीनचापकन्यावेलायां वश्यशान्तिपुष्टिं च ।
मारणनिग्रहकार्यं तस्याष्टमराशिवेलायाम् ॥ ४८ ॥

रौद्रग्रहेषु रौद्रं शुभेषु वश्यं च शान्तिपुष्टिं च ।
सूर्यार्किभौमयोगे मारणकार्यादिकं कुर्यात् ॥ ४९ ॥

मन्त्रस्त्रिविधः सर्वः शाक्तायणशैवशाम्भवाः ख्याताः ।
त्रिविधोच्चारास्तेषां भवन्ति मन्दोग्रशक्त्यान्ये ॥ ५० ॥

मन्देन सिद्धिर्भुवि शक्तिमन्त्रो
मायो भवो (?) येन च मध्यमेन ।
तीव्रेण सिद्धिः शिवमन्त्र एव-
मुच्चारभेदैः कथितैः फलाय ॥ ५१ ॥

आपूर्याजस्थानं हृदयं तद्वत् प्रपूरयेद् वायुम्।
उच्चारः शक्तिमन्त्रो मनो निरालम्बनीकृत्य ॥ ५२ ॥

अतितीव्रमतिफलद(मिद)मतिमन्दं मन्दमल्पतरमल्पम् ।
आध्यात्मिकमुच्चारं ज्ञात्वा युञ्जीत मन्त्रज्ञः ॥ ५३ ॥

---

१. 'षे द्विकले ख' ग. पाठः. २. 'ति ख' ख. पाठः. ३. 'नि' क. ख. पाठः. ४. 'त्रि' ख. पाठः. ५. 'विधेः ।' क. पाठः. ६. 'कुर्यात् ॥', ७. 'क्तगापशाम्भवाश्च विख्या', ८. 'क्त्य' ग. पाठः. ९. 'क्तमित्रो मालो भ' ख. पाठः. १०. 'दाः', ११. 'वा मुनीन्द्रैः ।', १२. न्दमल्पतरफलदम् ।' क. पाठः. १३. 'अध्यात्मक' क. ख. पाठः.

संवृतसुवृतव्यावृत उच्चारस्तस्य बाह्यतः प्रोक्तः ।
एतत् कथितं कार्यं मन्त्राणां तन्निगर्भं च ॥ ५४ ॥

अथ रक्षां वक्ष्येऽहं समस्तविषदोषहारिणीं पूर्वम् ।
हंसान्तर्गतनामर्क्षवेष्टितैचतुर्वकारस्थम् ॥ ५५ ॥

बाह्ये द्वादशपत्रं तद्बाह्ये षोडशारमम्भोजम् ।
सान्तं वह्न्यारूढं द्वादशजीवैर्विभिन्नाद्यैः ॥ ५६ ॥

बाह्ये शक्तेर्बीजं यवकारं षोडशस्वरैर्भिन्नम् ।
षोडशदले नियोज्यं बाह्ये वार्यो(ष्ट ? श्च) मण्डलकम् ॥५७॥

भूर्जे गोरोचनया कुङ्कुमकर्पूरहस्तिमदजात्या ।
आलिख्य यन्त्रराजं स धारयेत् सर्वरक्षकरम् ॥ ५८ ॥

इचतुर्थं सान्तयुतं सरेफमोङ्कारसंयुतं कूटम् ।
अग्नीन्द्रधामसंस्थं प्रतप्तहेमोपमं ध्यायेत ॥ ५९ ॥

व्यालेभमूर्ध्नि संस्थं वज्राकारं महज्ज्वलद्दीप्तम् ।
नाशयति तस्य शक्तिं शत्रूणां चापि वक्रस्थम् ॥ ६० ॥

तद्बीजमिन्द्रमण्डलसंस्थं क्रोधादिवाक्यसंस्तोभम् ।
सद्यः करोति साक्षात् पीतद्रव्येण संलेख्यम् ॥ ६१ ॥

भूतपिशाचभुजङ्गमचोरमृगारण्यशैलसंग्रामे ।
नद्युदधिसमुत्तरणे जप्तव्यं तत् प्रयत्नेन ॥ ६२ ॥

---

१. 'सुप्तव्या' ग. पाठः. २. 'हैं' ख. पाठः. ३. 'तं तच्चतु', ४. 'द्ये ॥' क. पाठः. ५. 'जं वकारकं षो' ख. पाठः. ६. 'योर्मण्ड' ग. पाठः. ७. 'सु' क. ग. पाठः. ८. 'लं दीप्तम् ।' क. ख. पाठः. ९. 'दिसं' क. पाठः.

अष्टारं राजीवं तत्कूटं कर्णिकाग्रगं ग्रहगम् ।
क्षिप ओंस्वाहेति चतुष्टयमब्जचतुर्दले योज्यम् ॥ ६३ ॥

तन्मध्यशङ्खबीजं शेषेषु दलेषु तत् प्रविन्यस्तम् ।
मायावेष्टितमेतद् रक्षकरं धारयेन्नित्यम् ॥ ६४ ॥

नाम वबीजान्तस्थं हकारशिरसि स्थितं सकारेण ।
जूंकारेण निरुद्धं स्थितं सैमध्ये तु शशिवेष्ट्यम् ॥ ६५ ॥

पश्चाद् रान्तान्तगतं मकारवर्णं त्रिमूर्तिमध्यस्थम् ।
रोचनया भूर्जतले लिख्य परं लोहसंवेष्ट्यम् ॥ ६६ ॥

धारयतु सव्यहस्ते लिप्तावेदोषापहृद् बिरोधहरम् ।
आयुधवारणमेतत् साक्षान्मृत्युञ्जयं नाम ॥ ६७ ॥

मृत्युञ्जयसंपुटितं नाम ब्लुंङ्कारवेष्टितं पश्चात् ।
जीङ्कारेण सशशिना संवेष्ट्य थवेष्टितं बाह्ये ॥ ६८ ॥

चतुरश्रमष्टकोणं तन्मध्ये लान्तमर्धचन्द्रेण ।
ईशे प्रणवं देयं जूङ्कारं निर्गतं चाग्नौ ॥ ६९ ॥

वीकारं वा याम्ये सनैर्ऋते वारुणे तु जूङ्कारम् ।
यं वायुस्थं धनदे मेरुशिखे चन्द्रपुरयुक्तम् ॥ ७० ॥

भूर्तारविशशिमूर्त्तिर्विलिखेद् घटिकां च कारयेल्लिङ्गम् ।
स्तम्भयति वह्निजालं दिव्यं चानेन मार्गेण ॥ ७१ ॥

---

१. 'ष्टाक्षररा' क. पाठः. २. 'काग्रहतः ।' क., 'को' ग. पाठः. ३. 'क्ष' ग. पाठः. ४. 'तमिका' क. ग. पाठः. ५. 'जू' ख. ग. पाठः. ६. 'विङ्कारं' क. ग. पाठः. ७. 'लिखेद् वज्रपु' ख. ग. पाठः. ८. 'पा' ख. पाठः. ९. 'दीपं चा' क. पाठः.

पद्मं द्वादशपत्रं[1] मध्ये जूङ्कारगर्भगं[2] नाम ।
[3]लुङ्कारं तन्मध्येऽन्तें(म ? र)ष्टदिक्पत्रगं प्रणवम् ॥ ७२ ॥

बाह्येऽष्टदलाम्भोजं षोडशशूलान्वितं महाचक्रम् ।
शूलाग्रेषु प्रणवं क्षुंग्लौं[5] शूलान्तरे न्यस्तौ ॥ ७३ ॥

भूर्जे रविणात्र लिखेन्निधापयेत्[6] पिष्टलिङ्गमध्येऽस्मिन् ।
संस्थाप्य वारि पात्रे दीपं तस्योर्ध्वगं न्यस्त्वा ॥ ७४ ॥

सकलविषसमूहं सर्वरोगांश्च हन्ति
ग्रहभुजगपिशाचांश्चालयत्येतदाशु[7] ।
गजतुरगरथादिस्तम्भकृद् युद्धभूमौ
कुलिशदहनशक्तिध्वंसकृद् यन्त्रराजः[8] ॥ ७५ ॥

वेदादिद्वयमध्यगतं[9] मग्लौयुग्मवेष्टितं ठगतम् ।
दिक्कुलिशाष्टाविद्धं ग्लौंक्ष्रौं[10] वज्रान्तरेषु गतौ ॥ ७६ ॥

तद्वज्रान्तं[11]प्रणवं महेन्द्रपुरमष्टवज्रसम्पूर्णम् ।
तत्कोणेषु लकारं बाह्येऽकारेण संवेष्ट्यं[12] ॥ ७७ ॥

अङ्कुशं[13]बीजनिरुद्धं हरितालेनाथ पीतगैरिकया ।
भित्तौ वासासि भूमौ शिलातले वा लिखेद् यन्त्रम् ॥ ७८ ॥

---

१. 'त्रं तन्मध्ये' ख. ग. पाठः. २. 'कं' घ. पाठः. ३. 'जू' ख. पाठः. ४. 'त' क. ग. पाठः. ५. 'गौं' क., 'ग्णौं' ग. पाठः. ६. 'विले निधा' ख. पाठः. ७. 'न्त्ये' ख., 'न्ते' ग. पाठः. ८. 'जम् ।' ख., 'जा' ग. पाठः. ९. 'तं ग्लौ' क., 'तामग्नौ यु' ख. ग. पाठः. १०. 'क्षौं' ग पाठः. ११. 'ष्ट', १२. 'ष्ट्यम्', १३. 'शं' ख. पाठः.

वा(ग्ग ? ग्दि)व्यंगर्भगमनक्रोधानलशकटयन्त्रपाताद्येम् ।
स्तम्भयति यैन्त्रमेतद् रौद्रमृगग्रोहसर्पांश्च ॥ ७९ ॥
स्तम्भयति शत्रुवाचैः शान्तान्तो मलयवर्णसंयुक्तः ।
षष्ठस्वरेण सहितः साध्याक्षरदर्भितः सद्यः ॥ ८० ॥
मचतुर्थो बिन्दुयुतः शत्रुशिरोरन्ध्रघण्डिकालीनः ।
स्तम्भयति वाक्प्रवृत्तिं ध्यातः पीतः सविच्छेदः ॥ ८१ ॥
मचतुर्थः शत्रुमुखे न्यस्तव्यो बिन्दुमस्तकः पीतः ।
अमरेन्द्रमण्डलस्थः क्रोधस्तम्भं करोत्याशु ॥ ८२ ॥
तालुरसनाग्रमूले त्रांकारस्तप्तहेमसङ्काशैः ।
ध्यातः प्रतिपक्षाणां वाचः स्तम्भं करोत्याशु ॥ ८३ ॥
चरणयुगजानुवक्षसि जठरस्तनकण्ठमूर्ध्नि संवेष्ट्य ।
शिरसः पायुस्थानात् पीताकारेण भूलग्नाम् ॥ ८४ ॥
ध्यात्वा शक्तिं वाचां गमनक्रोधास्त्रशत्रुसङ्घातम् ।
व्यालमृगोरगवदनस्तम्भं दृढलक्षणेनैव ॥ ८५ ॥
अथ परसेनास्तम्भनमहितप्रध्वंसि जीवरक्षकरम् ।
वीरश्रीकरमाद्यं विश्वेश्वरनिर्मितं शिवदम् ॥ ८६ ॥

---

१. 'व्य(ग)मनगर्भक्रो' ख. पाठः. २. 'द्याः' ख., 'द्या' ग. पाठः. ३. 'म' ख. पाठः. ४. 'ग्रासस' क., 'ग्रहादिस' ख. पाठः. ५. 'चं' क., 'चां' ख. पाठः. ६. 'न्तौ' ख. पाठः. ७. 'क्तम्' ख. ग. पाठः. ८. 'ध्वान्तः पी', ९. 'ता' ख. पाठः. १०. 'द्यः' क. ग. पाठः. ११. 'स्तकस्थः' क., 'ण्डपस्थः' ख. पाठः. १२. 'लं' ग. पाठः. १३. 'शम् ।' ख. ग. पाठः. १४. 'सि पा', १५. 'ने' ख. पाठः. १६. 'क्तिर्वाचां' ग. पाठः. १७. 'विशदम्' ख. ग. पाठः. १८. 'दम् ॥ इति सङ्ग्रामविजयोदयेऽष्टादशोऽध्यायः । वाग्दि' ख. पाठः.

वाग्दिव्यगैर्भगमने[2]क्रोधानलवैृष्टिवज्रपातानाम् ।
भूतपिशाचार्म्यैन्तरकुमारयक्षग्रहादीनाम् ॥ ८७ ॥
गजतुरगभुजगमृगरथ[5]शकटनदीयन्त्रशस्त्रजालानाम् ।
मकरशि[6]शुमारकाणां स्तम्भकरं यन्त्रराजेन्द्रम् ॥ ८८ ॥
द्वादशदलमम्भोजं सकर्णिकं तस्य तुम्बुँरुं मध्ये ।
दिक्कूटस्था देव्यो विदिग्गतं बीजकमलस्थम् ॥ ८९ ॥
शेषदलेषु नियोज्यं रान्तेन च साध्यनामसम्पुटितम् ।
सं च लकारे संस्थं चक्रेश्वरमिन्द्रबीजस्थम् ॥ ९० ॥
चक्रस्य बाह्यदेशं नपुंसकै[8]र्वेष्टितं च तद्बाह्ये[9] ।
यान्तं[10] तस्योर्ध्वस्थं मकाररविवेष्टितं भूयः ॥ ९१ ॥
पाशेन वेष्टयित्वा त्रिवारमुग्राङ्कुशेन संरुद्धम् ।
पश्चात् ठकारबीजं ततः फणीन्द्रस्य मन्त्रं च ॥ ९२ ॥
तद्बाह्योरगरूपं महोन्नतास्यं च मन्त्रकान् सर्वान् ।
शृङ्खलबन्धेन लिखेत् त्रिवारमक्षरसमूहं च ॥ ९३ ॥
मण्डलमुरुचतुरश्रं तद्बाह्येऽन्यं समं सुचतुरश्रम् ।
वज्राष्टकसंयुक्तं सुशोभनं चाष्टकोणयुतम् ॥ ९४ ॥
कोणेषु मन्त्रराजं चक्रासनसंस्थितं महायन्त्रम् ।
सितकर्पटे विलिखितं हरिद्रया शक्रतालेन ॥ ९५ ॥

---

१. 'नर्हग' ख. पाठः. २. 'नं', ३. 'वि' ग. पाठः ४. 'व्य' क. ग. पाठः. ५. 'व' क. पाठः. ६. 'शिं', ७ 'र्म्बु' ग. पाठः. ८. 'कं वेष्टि' क. पाठः. ९. 'ह्यम्' क. ग. पाठः. १०. 'न्तां' ख. ग. पाठः.

रेचकयोगेनैवं स्तम्भं शान्तिं च पूरकेणैव ।
पुष्टिकरं मृत्युहरं कुम्भकयोगेन कर्तव्यम् ॥ ९६ ॥
मुद्गचणकोरुमाषकचूर्णं तन्मर्दयेन्मृदा सूक्ष्मम् ।
तेन विरूपं कुर्यात् कराङ्घ्रिहीनं विकर्णाक्षम् ॥ ९७ ॥
तन्मध्ये तद्यन्त्रं न्यस्त्वा पीतेन तन्तुनावेष्ट्यै ।
पीतकुसुमोग्रगन्धैस्तमर्चयेत् पीतनैवेद्यैः ॥ ९८ ॥
उद्धर्ध्मूर्ध्वपादं कुर्यात् परचक्रसम्मुखं रूपम् ।
तत् परचक्रं नश्यति सद्यो भानोर्यथा ध्वान्तम् ॥ ९९ ॥
द्वादशदलाब्जमध्ये तुम्बुरुबीजं तदन्तगं साध्यम् ।
अनिलाग्निसमाक्रान्तं दिक्षु चतुर्देवता न्यस्त्वा ॥ १०० ॥
उपदिक्षु बीजपञ्चकमन्त्रः पत्रेष्वाधिष्ठितः क्रोधः ।
शिखिपवनसमाक्रान्तं ठकारपरिवेष्टितं पश्चात् ॥ १०१ ॥
बाह्ये च चतुस्त्रिंशत् कादिक्रोधान्तमाग्निवायुयुतम् ।
तत्रास्त्रराजमन्त्रे विदर्भितं कर्ण(को?मो)ट्याँ च ॥ १०२ ॥
आग्नेयमण्डलान्तररेफाक्रान्तं समन्ततश्चक्रम् ।
विषरुधिरचिताङ्गारैर्नलकेन प्रेतवस्त्रे तु ॥ १०३ ॥
आलिख्य सिक्थकाकृति मध्ये पत्रे निधाय शस्त्रेण ।
तं वेधयेत् सुमर्मणि सोऽपि रिपुः स्तम्भितः सद्यः ॥ १०४ ॥

१. 'पूरक', २. 'पू' क. पाठः. ३. 'ष्ट्यम् ।' ख. ग. पाठः. ४. 'न्य' ग. पाठः. ५. 'पा', ६. 'न्त्रा', ७. 'त्र्यं' ख. पाठः. ८. 'जे' क., 'र्नलरुधिरमे' ग. पाठः. ९. 'ण' ख. ग. पाठः. १०. 'शस्त्रे नि' क. ग. पाठः.

ओं कर्णमोटे लङ्के क्रूररूपे! दंष्ट्रे ह्रूं हुंफट् । ग्रस ग्रस क्रृ क्रृ छ्रृ छ्रृ भ्रृ भ्रृ हुंफण्णमः । कर्णमोटीमन्त्रामिदम् ।

अथ वक्ष्येऽन्यं मन्त्रं परसेनास्तम्भनं महारौद्रम् ।
तद्दर्शनेन रिपवो भवन्ति सर्वे निरुच्छ्वासाः ॥ १०५ ॥

प्रथमं प्रतिमां च लिखेद् वार्या[4]सनगां कपालकात्रि[5]क(री ? रा)म् ।
ग्लौङ्कारं नाभिगतं वृश्चिकमुदरे विलिख्य ततः ॥ १०६ ॥

बाह्येऽष्टकोणयुक्तं वज्रायुधलाञ्छितं पुरं शौ[6]क्रम् ।
युक्तं सप्तममुण्डं पिङ्गलमन्त्राष्टमं लेख्यम् ॥ १०७ ॥

जङ्कारमिन्द्रभागे क्रोङ्का[7]रं पावकालये न्यस्त्वा ।
ह्रीं[8] क्ष्रीं क्रों याम्यां च क्रमेण परिदापयेत् कोणे ॥ १०८ ॥

तन्मध्येऽनिलबीजं तदग्रगे पञ्चवक्रमुरगेशम् ।
तन्मुख्यनाम हृदये परसैन्यं भक्षयेद् रौद्रम् ॥ १०९ ॥

तद्धृदये च फडग्रे बाह्ये विद्याक्षरा[9]दिरावेष्ट्य ।
प्रेताम्बरे ध्वजे वा समालिखेद् यन्त्रपालेन ॥ ११० ॥

जं[10] जं[11] मारि महामारि! ग्रसं[12] प्रज्वल फट् स्वाहा । ओं नमो वज्रधराय सहस्रकोटिपरिवृ[13]तदेवताय अप्रातिहत-

---

१. 'रे' क. पाठः. २. 'ग्रां ग्रूं फ' ख. पाठः. ३. 'ग्रासः कृच्छ्रहुं' क., 'क क । भ भ हुं' ख. पाठः. ४. 'र्वी', ५. 'तृ', ६. 'श' ग. पाठः. ७. 'रं वामतः ओङ्कारमिन्द्रभागे क्रोङ्कारं पाव' क. ग. पाठः. ८. 'क्षीं', ९. 'भि', १०. 'जि' ख. पाठः. ११. 'ज' क. ख. पाठः. १२. 'स ज्व' ख. पाठः. १३. 'ताय देवताया अ' क. पाठः.

शासनाय प्रतिचक्रविनाशनाय उग्रतेजसे गरुडेन्द्रासनसंस्थिताय असिमुसलपाशहस्ताय शङ्खचक्रशरधनुर्धराय गर्जे धुन हुंफट् स्वाहा। ओं नमो वृषभायाप्रतिहतचक्राय महाबलाय महावीर्यपराक्रमाय रक्तालङ्कारस्वरूपाय अप्रतिहतवदनैकालदहनाय स्वाहा।

अङ्कं न्यस्त्वा विद्यां वामाद्यां च क्रमेण संवेष्ट्य।
प्रतिमायां क्ष्रींबीजे न्यस्त्वा साध्यं विदर्भकृतम्॥ १११॥
पीतद्रव्येण लिखेत् पूर्वोक्तपटक्रियासमानं च।
परसैन्यस्तम्भकरं नहि कार्यविचारणं लोके॥ ११२॥
मन्त्रान्तर्गतसाध्यं मन्त्रासनसंस्थितैः पुनर्मन्त्रम्।
षट्कोणमण्डलस्थं लिखेद् ध्वजे काकरक्तेन॥ ११३॥
पिकलेखिन्या बलिभुक्कण्ठे बद्धं नृकेशपाशेन।
भ्रमयति समस्तदेशं वायसवन्नित्यमुद्धूतम्॥ ११४॥
अचतुष्कमध्यसाध्यं लबीजसंरोधितं वषट्केण।
चतुरश्रपुरं दिक्षु च बाह्यं शाक्रं पुरं शुद्धम्॥ ११५॥
कोणेषु भैरवाष्टकरूपं तालेन पट्टमालिख्य।
धारयति पट्टमेनं सर्वायुधवारणं समरे॥ ११६॥
साध्यमिकारान्तस्थं मायासंवेष्टितं पुनर्बाह्ये।
क्लींकारेण विवेष्ट्यं त्रिधार्धचन्द्रं चतुश्शृङ्गम्॥ ११७॥

१. 'शरासना' क. ख. पाठः. २. 'क्रध' ख. पाठः. ३. 'यातिमह' ग. पाठः. ४. 'नाय स्वा' क. पाठः. ५. 'याः क्ष्रीबी' क., 'यां क्षीबी' ग. पाठः. ६. 'तं', ७. 'के' ख. पाठः. ८. 'द्विबले' क., 'द्विप' ग. पाठः. ९. 'तः' क. ग. पाठः. १०. 'ठे' ग. पाठः. ११. 'ह्रीं' क. पाठः. १२. 'द्वि' ग. पाठः. १३. 'तुश्चन्द्र' क. पाठः.

अग्रे क्लीङ्कारेण प्रपूरयेत् तेत् समन्ततस्तस्मिन् ।
कूटस्थदेवताद्यां शशिगर्भे योजयेदूर्ध्वम् ॥ ११८ ॥

मोहाः शोषाः क्रमशः पश्चाद् वौषट्पदेन संयोज्यम् ।
एतदुरुवीरपट्टं बद्ध्वा युद्धं विशेद् धीरः ॥ ११९ ॥

त्रिस्वरयुतमध्यगतं नाम लिखेन्निधनबीजगर्भान्ते ।
भवबीजेन विवेष्ट्य त्रिकोणधामाग्निबीजस्थम् ॥ १२० ॥

स्वाहाकारनियुक्तं मातृकयावेष्टितं क्रमेणैव ।
तद् ध्यायेदात्मानं भैरवमुग्रं महाभीमम् ॥ १२१ ॥

अत्यञ्जनपुञ्जाभं प्रलयाम्बुदनिस्वनं महाघोरम् ।
आरक्तमुक्तकेशं दंष्ट्रास्यं रिपुबलाभिमुखम् ॥ १२२ ॥

एकारमध्यसंस्थितनाम यबीजेन सम्पुटं कुर्यात् ।
बाह्ये षट्कोणपुरं यकारबीजैश्च संवेष्टयम् ॥ १२३ ॥

चतुरश्रपुरं पश्चाद् भूयो भूयः प्रकल्पयेत् तस्मिन् ।
देयाः पीठाधीशाः कोणेषु शितास्त्रसंयुक्ताः ॥ १२४ ॥

अश्राग्रेषु यकारं समालिखेत् पट्टमुत्तमं हैमम् ।
बद्ध्वा ललाटदेशे सङ्ग्रामं यातु वीरेन्द्रः ॥ १२५ ॥

तं दृष्ट्वाहवभूमौ शस्त्रं न्यस्त्वा क्षणेन निर्गच्छेत् ।
अतिशूरो दृढसत्त्वो मन्त्रौषधसंयुतो वापि ॥ १२६ ॥

---

१. 'भागे ह्रींका' क. पाठः. २. 'तं', ३. 'दैवताद्या श' ग. पाठः. ४. 'शे' ख. ग. पाठः. ५. 'ज्य ।' क. ख. पाठः. ६. 'जेष्ठम् । म' ग. पाठः. ७. 'स्थः ॥', ८. 'क्तः' ख. ग. पाठः.

जङ्कारद्वयमध्ये साध्यं हंसाननेषु सं[1]योज्यम् ।
जीवेन वेष्टयित्वा भैरवकूटेन संवे[2]ष्टयम् ॥ १२७ ॥
बाह्ये ठकारवलयं चतुर्दलं नीरजं च कर्णिकया ।
कूटस्थान्तर्दलको[3]ठकारसंवेष्ट्य(?)[4]शस्त्रेण ॥ १२८ ॥

ओं ह्रीं प्रस्फुर[5] प्रस्फुर । घो[6]रतररूपे चट[7] चट प्रचट प्रचट कह कह [8]भ्रम भ्रम भ्रामय भ्रामय[9] धम धम मथ मथ घातय घातय हुंफट् ।

अस्त्रेणानेन ततो [10]रंकारबाह्ये विवेष्टयेत् पश्चात् ।
पिङ्गलशस्त्रं[11] देयं खादकशस्त्रं[12] पुनर्देयम् ॥ १२९ ॥
सन्तापयेन्निरन्तर[13]मन्त्यठकारं तु मातृकावी[14]तम् ।
[15]तद्बाह्येऽपि ठकारं पीठाधीशांस्ततो न्यस्त्वा ॥ १३० ॥
वलयेन [16]समोपेतास्तद्बाह्ये द्वादशो[17] नृयोगिन्यः ।
ह्रीङ्कारं शूलाग्रे फट्कारयुतो नमस्कारः ॥ १३१ ॥
तद्बाह्ये फेलखिलं प्रदापयेत् तत्समन्त[18]तः सम्यक् ।
एतत् परसैन्यहरं स्वसैन्यसंरक्षणं प्रोक्तम् ॥ १३२ ॥

---

१. 'निर्योज्यम् ।' ख. पाठः. २. 'ष्टच ॥' ग. पाठः. ३. 'र' ख. ग. पाठः. ४. 'शा' क. ग. पाठः. ५. 'र । घो' क. पाठः. ६. 'रघोरतनुरूप' ग. पाठः. ७. 'ट क' क., 'टच्छट' ग. पाठः. ८. 'बम बम' ग. पाठः. ९. 'य म' ख. पाठः. १०. 'ठ', ११. 'स्व-मन्त्रं दे', १२. 'स्वमन्त्रं पु' ग. पाठः. १३. 'रठङ्कारं', १४. 'प्रो' क. पाठः. १५. 'पीठाकारं भैरवं पीठा' ग. पाठः. १६. 'ततोपेतान्तद्बा' क., 'ततोवेदान्वद्बा' ग. पाठः. १७. 'शो' ग. पाठः. १८. 'न्तकं समं न्यस्त्वा । ए' क., 'न्तकं समं सम्य' ग. पाठः.

अथ शब्दभङ्गमन्त्रं वक्ष्ये रुद्रेण निर्मितं सारम् ।
तुटिपटहशङ्खमद्दलशब्दं श्रुत्वा प्रभीताः स्युः ॥ १३३ ॥
मन्त्रेण मन्त्रयित्वा तूर्यं[1] कुर्यात् प्रबोधनं सम्यक् ।
मातृकेरुकं[2] च पितृवनभस्मविमिश्रं च कपिकञ्चुम् [॥ १३४ ॥
यूथीकन्यामूलं पिष्ट्वा[3] तल्लेपयेद् दृढं तूर्यम् ।
विद्या हि मन्त्रयित्वा स सप्त वारांस्ततः पुरुषः ॥ १३५ ॥

ओं[4] अं हं हलियांहे[5] महेलि[6] विहंञ्जहि[7] साहिणेहि[8]
मशाणेहि खाहि लुञ्चहि किलिकिलि काळि हुंफट् स्वाहा ।

एवं कृत्वा पश्चात् सर्वज्ञस्योदयं स्मरेच्छब्दम् ।
श्वेतापराजिताया मूलं चोन्मत्तपत्ररसम् ॥ १३६ ॥
आत्मनि तिलकं कृत्वा शब्देनैवाभिकर्णयेत् सम्यक् ।
भवति परचक्रभङ्गः स्वसैन्यविजयोऽपरश्रवणात् ॥ १३७ ॥
अथ शस्त्रभङ्गचक्रं परचक्रस्तम्भनं स्वचक्रहितम् ।
मोटनमखिलास्त्राणामरिविद्रुतमंत्र[10] वक्ष्यामि ॥ १३८ ॥

ओं ह्रीं हूं[11] ह्रः । अस्त्र मोटय मोटय । चूर्णय चूर्णय
सर्वसत्वान् मर्दय मर्दय । हूं हुंफट्[12] स्वाहा ।

मन्त्रं सं[13] सप्तवारं न्यस्त्वा ध्यायेत् परं महारौद्रम् ।
परचक्रस्याभिमुखं भीमं दंष्ट्रोत्कटं देवम् ॥ १३९ ॥

---

१. 'दूरं कु' ख, 'चतुरं कु', २. 'च', ३. 'ट' ग. पाठः. ४. 'ओं अं ह', ५. 'यामहे', ६. 'हे वि' ख. पाठः. ७. 'मञ्जहि', ८. 'सो' ग. पाठः. ९. 'ह' क. पाठः. १०. 'मस्त्रमन्त्रं व'. ११. 'हूं ह्रीं ह्रः' क. पाठः. १२. 'ट् । म' क. ग. पाठः. १३. 'समस्तवा' क. पाठः.

घोरं घोरातिघोरं प्रळयशिखिनिभं वक्रदंष्ट्रास्यमुग्रं
वक्रास्यं वक्रनेत्रं धवळनरशिरःस्रग्धरं शूलहस्तम् ।
दीर्घाङ्गं[1] दीर्घबाहुं भ्रुकुटिपुटमुखं[2] दीर्घकण्ठं त्रिणेत्रं[3]
ध्यायेदात्मानमीशं प्रचुरपरबलं भक्षयन्तं सुदीप्तम्
[॥ १४० ॥

एवं ध्यानेन दृढं स्तम्भयति समस्तशत्रुसङ्घातम् ।
मर्दयति शत्रुवर्गं द्रवयति[4] शस्त्रास्त्रसङ्घातम् ॥ १४१ ॥

दानववधाय चक्रं पूर्वं सृष्टं त्रिलोचनेनैव ।
अभिवृद्धिकरं नित्यं स्वसैन्यसंरक्षणं ध्येयम् ॥ १४२ ॥

भूतपिशाचग्रहगणदेवासुरदानवोरगाः सर्वे ।
नश्यन्ति गरुडचक्रस्मरणेनानेन भीताश्च ॥ १४३ ॥

ओं हुं[5] पक्षि क्षिप[6] जुं महापराक्रम! सर्वसैन्यं भक्षय भक्षय मर्दय मर्दय चूर्णय चूर्णय निद्रापय निद्रापय हुं[7] फट् ख ख भैरवो ज्ञापयति स्वाहा ।

वृश्चिकया मन्त्रितया परचक्रस्तम्भनं भवेत् सद्यः ।
भ्रामितया साधितया रिपवो भयविह्वलाः सर्वे ॥ १४४ ॥

पृथुबलमतिरौद्रं पञ्चवर्णं महान्तं
निहितभुजगदेहा दीर्घघोणं द्विपक्षम् ।

---

१. 'ङ्क' ख. ग. पाठः. २. 'त' क. पाठः. ३. 'ने' ग. पाठः. ४. 'द्रा' ख. पाठः. ५. 'हं' ग. पाठः. ६. 'प ज- क्षिप जुं' ख. पाठः. ७. 'हुं ख' क. ग. पाठः.

कपिलनयनमुग्रं चिन्तयेदात्मरूपं
स्वयमपि परसैन्यं भक्षयन्तं खगेशम् ॥ १४५ ॥

इति सङ्ग्रामविजयोदये अष्टादशोऽध्यायः ॥

---

## अथैकोनविंशोऽध्यायः ।

अथ वक्ष्येऽन्यं योगं व्याधिकरं स्फोटदाहशोषकरम् ।
रिपुनामसमायुक्तं कुर्याल्लवणादिभिः कटु[2]कैः ॥ १ ॥

मन्त्रम् ओङ्का[4]रैकसम्पुटं सकलं हि[5]मिहि[6]मन्तं[7] सिमि-
सिमन्तं ख ख हे चामुण्डे! ख ख हुम्फट् स्वाहा ।

मन्त्रेणानेन ततो होमं कुर्याद् दिनत्रयं पुरुषः ।
भङ्गं प्रयाति सद्यः परचक्रं व्याधिभिर्ग्रस्तम् ॥ २ ॥

अथ वक्ष्येऽन्यच्चक्रं त्रैलोक्यविमर्दनं महारौद्रम् ।
पूर्वं रुरोर्वधार्थं नीलग्रीवोद्भवं सारम् ॥ ३ ॥

ओं चामुण्डे! ज्वलितशिखे! कपालमालिने! क्रुद्धे!
हुं खे[9] ख जुं ख ख । कह कह चामुण्डे चामुण्डे ख ख
हुम्फट् स्वाहा[10] ।

भूतदिनेऽष्टसहस्रं चामुण्डाधाम्नि तं[11] जपेन्मन्त्रम् ।
सम्पूज्य कालरात्रिं रात्रौ शुद्धोपवासी च ॥ ४ ॥

---

१. 'एकोनविंशोऽध्या', २. 'कुकुटैः ।' ख. पाठः. ३. 'कैः' । ओ' ख. ग. पाठः. ४. 'रेकास' क, 'रे करस' ग. पाठः ५. 'जि', ६. 'छि' क. ग. पाठः. ७. 'न्तं पोटिच्छन्तं सि' ग. पाठः. ८. 'हुं स्वा' क. ग पाठः. ९. 'खं जुं खः हे चा', १०. 'हा हुंफट् स्वाहा । भू', ११. 'तज्जपे' ग . पाठः.

सप्ततरुस्थितदेव्यः सकालरात्र्यः समस्तविख्याताः ।
तत्स्थानमृत्तिकासृक्चरुरम्भामातुलुङ्गयुतम् ॥ ५ ॥
पिण्डीतगरं साक्षादधःकुसुममूलसर्वफलमिश्रम् ।
तत्सर्वं संपिष्ट्वा मन्त्रेण समन्त्रयित्वा तु ॥ ६ ॥
आलिख्य तेन नेत्रे वाससि वा सप्तमातृकाशस्त्रात्[2] ।
बद्ध्वा प्रविशेत् समरं सप्तदिनं मन्त्रितो वीरः ॥ ७ ॥
भ्रश्यन्ते सप्तमुखाः स[3]सप्तशस्त्राश्च शस्त्ररूपधराः ।
दृष्ट्वापि रौद्ररूपं शस्त्रं न्यस्त्वा विनिर्यान्ति ॥ ८ ॥
अथ देवताङ्गभूता(:?) सद्यो मृत्युप्रदायिका विद्यां ।
संसाधिता चैं सर्वं करोति शत्रुक्षयं सद्यः ॥ ९ ॥
सप्ताभिमन्त्र्य वासरमम्भोमध्ये निधापयेत् पुष्ये ।
प्राक् कृष्णचतुर्दश्यां मध्या धवला चतुर्दशी यावत् ॥

ओं ह्रीं महेन्द्रकुलिशधारिणि जुङ्कारं[10]मन्त्रिणि चूळि[11] तोंहिं[12] चळ विहरि[13] नरच्छुहु पुणुजो विणी चुकुच्चच्छ ।
विभ्रान्तं भग्नगलं करचरणमितस्ततो लिखेत् साध्यम् ।
शवशयनाकारेण प्रेतालयकर्पटे धीमान् ॥ ११ ॥

---

१. 'मरुत्स्थित' क. पाठः. २. 'शास्त्रात्' क., 'शास्तात्' ग. पाठः. ३. 'मस्तश', ४. 'द्याः' क. पाठः. ५. 'त्र' ग. पाठः. ६. 'ष्वा' ख. पाठः. ७. 'ध्यम् ।' क. ख. पाठः. ८. 'श्यां ध' ख, 'श्यां या ध' ग. पाठः. ९. 'त् । मन्त्रः । ओं' क. पाठः. १०. 'रिणिजुन्त्रिणि' क, 'रजन्त्रिणि ग. पाठः. ११. 'ल' क. ग. पाठः. १२. 'क' क. पाठः. १३. 'वहरिहरहिहुवु सजो विन्नीकुचुच्चछज्ज । विभ्रा' क, 'विंहरीहरएहुपुणुज्ज णीचुकुच्छच्छञ्ज वि' ग. पाठः.

हृत्तन्नाम न्यस्त्वा सूत्रेणावेष्ट्य नीलसूत्रेण ।
तन्मोटयेत् समस्तं विद्योच्चारेण सङ्ग्रामे ॥१२॥
म्रियते सद्यः शत्रुर्भीतो वा स्फोटरोगसंग्रस्तः ।
निश्चेष्टो निर्जीवो भवेन्नरः सप्तरात्रेण ॥ १३ ॥
अथ विभ्रमचक्रमिदं भेकान्तरितं लिखेद् रिपोर्नाम ।
ठान्तरितं तत् कृत्वा भेकास्ये निक्षिपद्दे यन्त्रम् ॥ १४ ॥
कण्टकविद्धं तन्मुख-
ममृतेन च वेष्टयेत् ततः पश्चात् ।
संवयति काष्ठपाते-[२]
नाक्रम्य पदेन निर्गच्छेत् ॥ १५ ॥
अजैरुधिरमुद्रकेऽस्मिन् क्षिपेत् ततस्तस्य सर्वभवनान्ते ।
भीतो[?] वा ज्वरतप्तो नहि युद्धमुखं रिपुर्याति ॥ १६ ॥
सॉन्तानका(?)न्तर्गतमरिनाम लिखेत् तमालपत्रान्ते[५] ।
आलिख्याङ्गारेण स्नुहिदुग्धविमुद्रकान्तस्थम् ॥ १७ ॥
अभिनवतुषमृद्भह्नौ क्षिपेत् ततस्तत्र सप्तमे ज्वरितः ।
पक्षद्वयेन म्रियते दीर्घायुश्चेद् ध्रुवं देही ॥ १८ ॥
सान्तो मलयारूढः षष्ठकलावेष्टितस्थितार्धेन्दुः ।
तत् सप्तधा विभेद्यं लिखेत् क्रमात् तालपत्रेण ॥ १९ ॥
तद्बाह्ये रेखाद्वयसंवेष्टितमग्रवज्रसंरुद्धम् ।
बा(ह्य ? ह्ये ऽ)स्त्रमन्त्रवेष्टितमभेद्यकवचं भवेन्नाम ॥ २० ॥

---

१. 'तु' २. 'पते पादेनाक्रम्य नि', ३. 'जस्वररुधिरमृके-ऽस्मिन्', ४. 'सन्तानका' क. पाठः. ५. 'भ्रे' ख. पाठः.

शिरसि भुजे कण्ठे वा कट्यां वा धारयेच्छिखाग्रे वा ।
धारयति बाणजालं नाराचाद्यस्त्रसङ्घातम् ॥ २१ ॥

ओं सर्वशस्त्रविनाशनाय[1] स्वाहा । सर्वविघ्नाय स्वाहा[2] । शरबाणाय स्वाहा ।

नामयचतुर्थमध्ये सकारपरिवेष्टितं बहिः पश्चात् ।
मृत्युञ्जयसम्पुटितं समावृतं चार्धचन्द्रेण[3] ॥ २२ ॥
भूर्जे कर्पटके वा गोरोचनया लिखेत् परं यन्त्रम् ।
सितसूत्रेण तु वेष्टितमेतल्लिङ्गे मधूच्छिष्टे ॥ २३ ॥
लँचतुर्थं बिन्दुयुतं कलावृतं जीवबीजसंयुक्तम् ।
बाह्ये सङ्कारयुतं पकारसुस्थं ठकारस्थम् ॥ २४ ॥
ऐन्द्रेण तु सम्पुटितं भूर्जे पत्रे लिखेत् परं यन्त्रम् ।
शशिकुङ्कुमरोचनया संवेष्ट्य श्वेतसूत्रेण ॥ २५ ॥
संवेष्ट्य सर्पकेन[4] तु कलशे संस्थाप्य पूर्णतोयेऽस्मिन् ।
सम्पूजयेत् सुगन्धैर्मृत्युहरं पञ्चषण्मासात् ॥ २६ ॥
वेदाद्यो जूङ्कारो जीवो बिन्दुद्वयेन संयुक्त ।
सम्पुटितः स्वं[5](क)नाम्ना[6] स जयेन्मृत्युञ्जयं नित्यम् ॥ [२७ ॥
अथ कृतरक्षः पुरुषो विद्यासन्नद्धविग्रहः पूर्वम् ।
पश्चात् षट्कर्मविधिं ज्ञात्वा कुर्यात् स मन्त्रज्ञः ॥ २८ ॥

---

१. 'वास्त्र', २. 'हा । नाम', ३. 'ण ॥ यचतुर्थेन तु वेष्टितमष्टाविंशतिगणक्रमेणैव । वर्षान्तन्तं ध्यायेन्मूर्ध्नि सितं सप्तरात्रेण ॥ भू' ख. पाठः. ४. 'श्य', ५. 'क', ६. 'स्वन्नाम्ना' क. पाठः.

देवासुरयुद्धेऽस्मिन् देवेन विनिर्मिता त्रिशूलभृता ।
प्रत्यङ्गिराश्च विद्याः[1] प्रवक्ष्यते तास्ततस्तथ्याः[2][3] ॥ २९ ॥

भूतभुजङ्गमराक्षसपिशाचवेतालगुह्यकाः सर्वाः ।
तत्स्मरणान्नहि रिपवो नश्यन्ति ततो विषादीनि ॥ ३० ॥

ओं नम उमापतये । एह्येहि भगवन्! श्रीकण्ठ! विरूपाक्ष! विकृत[4]नयनाट्टहास! महाभैरव[5]! भागीकरण[6] ह(त ? न) हन सर्वपापानि कट कट। दंष्ट्रोत्कटाट्टहास! पिङ्गलनयन! हन हन। दह दह। पच पच। विधूतसर्वशत्रुरक्ष। सर्वभयोपद्रवोपसर्गोभयेभ्यः भो भोः त्रिपुरविध्वंसनकर! भ्रम भ्रामय[7] भ्रामय सर्वाहितानि संमर्द संमर्द विदा[8]रय विदारय देहि विरूपाक्ष! सर्प सर्प सत्याहतं कुरु। सर्वकामहितं कारय। हा हा ही ही हू हू[9] हे हे है है हूंत दह दह पच[10] पच विधूतसर्वसत्त्व! रक्ष रक्ष सर्वभयेभ्यो यदुल्लाङ्घितदशमशकं सरीसृपेभ्यो दुष्टमूषिकविषेभ्यः[11]सर सर घूर्णय घूर्णय सर्वाहितैषिणो ये मम जुह्वति मन्त्रं तज्जयन्ति[12] ख ख। खादयन्ति वेतालामुपदिशन्ति । हन तां पच तां दह तां शप तां ये ममाहितं चिन्तयन्ति कुर्वन्ति करापयन्त्यत्र मन्यन्ते तत्

१. 'द्या:' क. पाठः. २. 'न्त', ३. 'स्थ्याम्' । ख. पाठः. ४. 'रूपन', ५. 'वाभा', ६. 'ण एकः सर्वहा त्रिपुरविध्वं' ७. 'य स' क. पाठः. ८. 'घारविधार' ख. पाठः. ९. 'हु', १०. 'कचकच', ११. 'भ्यो रसप' क. पाठः. १२. 'ति मन्त्रं तज्जयति ख' ख. पाठः.

सर्वज्ञ[1]! स्तम्भय स्तम्भय मोहय मोहय द्रावय द्रावय । त्रिशूलपाणिराज्ञापयति । सिध्यन्तु मे मन्त्रपदानीन्द्राय स्वाहा[2] । देवदानवेभ्यः स्वाहा । प्रेतपिशाचपूतनाकटपूतना-किन्नरमहोरगेभ्यः स्वाहा । भूर्भुवः स्वाहा । देवात्त्वं रक्ष रक्ष । सर्वभयेभ्य[3] उपद्रवेभ्य[4] उपसर्गेभ्यः स्वाहा[5] । द्वितीयां विद्यां मानसीं नाम प्रत्याङ्गिरां प्रवक्ष्यामि । सर्वविषघातिनि कलिकलहविवादप्रशमनि[6] कृते कारापिते कृत्यकर्माणि का-चो[7]द्दर्कू[8]श्माण्डभूतग्रहापस्मारकटपूतनाधिपतये कादीनां कृ-च्छ्रादीनि हन[9] हन[10] सर[11] सर रुद रुद[12] किञ्जल्क किञ्जल्क त्रिपुरान्तक विचर विचर प्रहर प्रहर ज्वलन तुट तुट प्रचट प्रचट स्वाहा । धुन स्वाहा । कुरु कुरु स्वाहा स्वर स्वाहा । समयेन कृतं येन करापितं करिष्यति अनुमोदी येन नग्नेन मुण्डितेन वा प्रव्रजितेन वा जले[13] वा स्थले[14] वा तु[15]ष्यति नि-रीक्ष्य[16]ते वा तत् सर्वं तस्मिन्नपगच्छतु वृक्षमिन्द्राशनिर्यथा । ब्रह्माणी स्वाहा । वैष्णवी स्वाहा । रुद्राय स्वाहा कार्तिकेयाय स्वाहा[17] । प्रजापतये स्वाहा । विरूपाय स्वाहा । वज्रपाणये

१. 'र्वसंज्ञ', २. 'हा । देवदत्तं' क. पाठः. ३, ४. 'भ्यो-प' क. ख. पाठः. ५. 'हा । भूःस्वाहा भुवःस्वाहा स्वःस्वाहा भूर्भुवः स्वःस्वाहा देवदत्त रक्ष रक्ष सर्वभयेभ्योपद्रवेभ्योपसर्गेभ्यः स्वाहा । द्वि' ६. 'नी' ख. पाठः. ७. 'खो', ८. 'कू' क. पाठः. ९, १०. 'ह' ख. पाठः. ११. 'न रु', १२. 'द स्वाहा । सम', १३, १४. 'लेन वा' क. पाठः. १५. 'सु' ख. पाठः. १६. 'क्षि', १७. 'हा । वज्र' क. पाठः.

स्वाहा[1]। सूर्याय स्वाहा । सोमाय स्वाहा । मरीचये स्वाहा । वसुभ्यः स्वाहा । मातृभ्यः स्वाहा । दितये स्वाहा । अदितये स्वाहा[2]। आदिभ्यः स्वाहा । वनस्पतिभ्यः स्वाहा । भूःस्वाहा । भुवः स्वाहा । (भुवस्वाहा?) स्वः स्वाहा । भूर्भुवः स्वः[3]स्वाहा । मन्त्रे[4] मम स्वाहा । कर्मणा[5] समये स्वाहा । सर्वोपत्प्रशम(ने ? नाय) स्वाहा[6] । अरुणाय स्वाहा । सौभाग्यपतये स्वाहा । तद्यथा सर सर चँट[7] चट घट घट प्रचण्डे चण्डिनि रुद्र तुरु[8] तुरु हन हन विदारय विदारय आगच्छ ममार्थं प्रसाधय । सर्वकामान् पूरय । देवदत्तं रक्ष रक्ष[9] । ओं ह्रीं हूं हें हन हन धम धम फट् स्वाहा ॥

सकलविषदर्पराक्षसभूतग्रहशत्रुदुष्टहननी या ।
पथि चोरविघ्नमथनी विज्ञेया मानसी नाम ॥ ३१ ॥

ओं ह्रीं नमः कृष्णवाससे । शतसहस्रसिंहवाहने ! सुसहस्रवदने ! महाबले ! अपराजिते ! प्रत्यङ्गिरसे[10] ! सर्वसैन्यपरकर्मविध्वंसिनि ! परमन्त्रच्छेदिनि ! सर्वभूतदमनि ! सर्वे देवि ! बन्ध बन्ध सर्वविघ्नान् छिन्द निकृन्त निकृन्त । सर्वदुष्टान् भक्षय भक्षय । ज्वलितजिह्वे ! करालवक्त्रे ! प्रत्यङ्गिरे ! नमोऽस्तु ते स्वाहा ॥

---

१. 'हा । सो', २. 'हा । दिक्पतये स्वाहा । भूःस्वःहा', ३. 'सुवःस्वा', ४. 'न्त्रं', ५. 'र्वत्र प्र' क. पाठः. ६. 'हा । सौ', ७. 'पदपद घ', ८. 'र' ख. पाठः. ९. 'क्ष स्वाहा । ह्रीं हुं हें' क. पाठः. १०. 'रि स' ख. पाठः.

भूर्जे गोरोचनया विद्यां प्रत्यङ्गिरां च संलिख्य ।
लो[१]हैस्त्रिभिरावेष्ट्य स्थिरं स सन्धारयेद् रक्षाम् ॥ ३२ ॥

ओं हिलि हिलि मिलि मिलि वलि प[२]लैवती सारी सारवती बलवीर्यवती अनले अजि[३]ते अपराजिते अद्भुते ब्रह्मण्ये शरणागतवत्सले अपराजितपरबलपराक्रमक्षुभितसमुद्राम्भोजन[४]र्दिं नदं( ? )गर्जति भुवनसंहारकारि[५]णि शूलिनि पद्मिनि नमोऽस्तु ते भगवति ! । या सा भगवति बाले भवन्तु सर्वनाथा बालेन भगवद्वीर्येण भगवत्प्रसादेन ममामुकस्य सपरिवारस्य सर्वार्थानुकूले भवन्तु सर्वनाथाः प्रतिहता भवन्तु । सर्वशत्रुभ्योऽपराजिता भवन्तु । मारणोच्चाटनस्तम्भनविद्वेषणवशीकरणेभ्यो विष्णुनानेन भवन्तु नाकृतश्च (?) मे वेदोक्तायुषः पुत्रपौत्रेण सम्पद्यताम् ।

चन्द्रमौलिर्यथा भद्रे ! सर्वार्थैषापराजिता ।
तेन सत्त्वेन मे सि[६]द्धिर्विद्येयमपराजिता ॥ ३३ ॥

देवमातृगणैश्चापि विद्याधरमहोरगैः ।
न(रैः ? यैः) पराजि[७]ताँ लोके तन्नाम्र्ना[८] अपराजिताः ॥ ३४ ॥

---

१. 'भै', २. 'लपवतीयसारी सारपव' क. पाठः. ३. 'ते । अद्भु' ख. पाठः. ४. 'निर्दीने' क. पाठः. ५. 'णि चण्डक्रोधे रुद्राजस्वयमायाहि भवति संवर्तवर्त आघोषवतीयेशे हलिने हारिणि सुलिनि चाक्रिणि शू' ख. पाठः. ६. 'द्धिं विद्ये', ७. 'तो' क. पाठः. ८. 'म्नापराजिता ॥' ख. पाठः.

परिरक्षन्तु मां देवि! शरणागतवत्सले[1]! ।

य इमां विद्यामधीत्य श्रुत्वा वाशुचिः सुशुचि[2]र्भवति । अनुपवास्युपवासी भवति ।

यस्त्विमां धारयते विद्यां न स पापेन लिप्यते ॥ ३५ ॥

न तस्य शस्त्राग्निकलहवधबन्धनभ[3]यं भवति । अनेकविभवसम्पन्नो भवति स्वाहा । इति मृतसञ्जीवनी स्वाहा । विद्यायै स्वाहा । ओं ह्रीम् उमे शिवे ज्वल ज्वल दीप्य दीप्य त्रिशूलव्यग्रहस्ते अपराजि[4]ते अपतितवाक्ये र[5]क्ष मां सर्वभूतेभ्यः कुरु कुरु एकवीरे पर[6]मन्त्रं छिन्द छिन्द निकृन्त निकृन्त[7] हूं हुंफट्स्वाहा । ओं ह्रीं क्रों हुं सुं जुं[8] न[9]मः कुरुख । ओं सों नमः ।

सर्वविद्याधिपतये सर्वदेव! नमोऽस्तु ते ।
सर्वार्थसाधनी सौभाग्यायुः (श्री)कीर्तिवर्धिनी ॥ ३६ ॥

लक्ष्मीः श्रीः पुष्टि(दा) मूर्ध्ना विष्णुना धारिता स्वयम् ।
त्रासनी सर्वजन्तूनां पापदुःस्वप्ननाशिनी ॥ ३७ ॥

कल्पाशीतिसहस्राणां प्रयुक्तानां विनाशिनी ।
मूलकर्मप्रवृत्ता[10]नि होमकर्मार्थदारुणाम् ॥ ३८ ॥

---

१. 'ले ! । इ', २. 'चिर्भ' क. पाठः. ३. 'यं न भ' ख. पाठः. ४. 'ते पतिवा' क. पाठः. ५. 'क्ष रक्ष रक्ष मां' ख. पाठः. ६. 'त' क. पाठः. ७. 'न्त हुंफ' ख. पाठः. ८. 'जुं', ९. 'मः ओं श्रीं पुष्टि', १०. 'नां' क. पाठः.

अग्निहोमां [1]स्वनन्त्रं जपं होमादिसुविंश[2]तिरष्टोत्तरा[3]णां सशतं [4]क्षणमुद्दिष्टलक्षणं दुःस्वप्न[5]यातनञ्च दुर्वृत्तं दुष्टं विंशति [6]तक्षणं कालल्लापितं वापि पुरुषत्रिभिरेव च (?)

बालैर्वापि युवैर्वृद्धैः स्त्रीभिर्वाथ नपुंसकैः ।
तथा प्रव्राजितैश्चापि ब्राह्मणैः क्षत्रियैस्तथा ॥ ३९ ॥
क्षतसङ्कीर्णकैश्चापि अन्त्यजैश्च दुरात्मभिः ।
क्षिप्रं ग्रसति ताः सर्वाः प्रत्य[7]ङ्गिर्या भवाम्यहम् ॥ ४० ॥

इदं मन्त्रमिदं स्वरबीजं[8] ये मन्यन्ते भूम्यन्तरिक्ष-वासिनि वर्णसत्ये शिवरूपि भवे भव[9] ममामुकस्य शाम्यन्तु[10] पापानि । शाम्यन्तु घोराणि शाम्यन्तु कारितानि । शाम्यन्तु दुष्टानि । शाम्यन्तु जन्मदोषाः । शाम्यन्तु कर्मदोषाः । शाम्यन्तु भावदोषाणि फट्[11] तुटि तुटि छिन्द छिन्द । रुद्राणि वरघुरुटि नमो भैत्रको[12]ले हन हन स्वाहा । [13]पमते पुत्रिरिवेका(?) रुद्राक्षि ते स्वाहा । यज्ञहरिणी स्वाहा । पार्श[14]क्रान्तिनि स्वाहा । वज्रिणि स्वाहा कङ्कारदहनि स्वाहा । देवरुद्रचराचरानिलये

---

१. 'सुशस्त्रं जपहो' क., 'स्वशस्त्र जपहो' ग. पाठः. २. 'ति अष्टो' क. ग. पाठः. ३. 'णां सुश' क., 'णां श' ग. पाठः. ४. 'क्षुण्णं दुर्द्यष्ट' क., 'क्षुणं दुर्दिष्ट' ग. पाठः. ५. 'प्नप्रतिघात' क. ग. पाठः. ६. 'कक्षेणतः काललावत' क. ग. पाठः. ७. 'त्या' ग. पाठः. ८. 'विजाविजशं म' ख. ग पाठः. ९. 'वे' क. पाठः. १०. 'न्तु महोन्मादाः शाम्यन्तु कर्म', ११. 'टि छिन्द भिन्दरु' ख. पाठः. १२. 'का लो' ग. पाठः. १३. 'ममतेपूरितचेता रुद्रचलाचलानिलये' क., 'पमृचे पूतिरिवेतो रु' ग. पाठः. १४. 'शिनि क्र' ख. पाठः.

क्ष[1]तकारितः प्रतिकर्तारं निधनं भवति[2]। भवपुत्र हुलु हुलु कुलु कुलु[3] रुलु रुलु महामेघवाहिनि ? रक्तवर्णरक्तोत्पले[4]कृतशिखा[5]मण्डिते[6] रक्तमुखि महानादानुनादिनि! सिंहवक्त्रे स्फुट स्फुट हुंफट् स्वाहा। इमां[7] विद्यां यो जपति पठति शृणोति धारयति नान्यैश्च विघ्नैर्बाध्यते। न च रोगभयं न चास्त्रभयं नोपसर्गाः[8] ओं नमोऽस्तु शङ्करनारायणाय। महावे[9]यो[10] कौळि[11] तुटे[12] तुटे[13] रोचनि प्रतिहतपरम्परेण प्रत्यङ्गिरे स्वाहा। रेवती प्रत्यङ्गिरा नाम सर्वदोषोपशमनी भवति। ओं नमो देवि धनददुहिते वसुधारे धारय तँए[14] हुरु धनेश्वरि रत्नदेहे धनसागरे महानिधाने निधिकोटिसहस्रपरिवृते एह्येहि प्रविश मम पुरं[15] मम भवनं धनं भगवति महा[16]धाराभारं पातय पातय हुरु हुँरु[17] हुङ्कारे हुँङ्कारे[18] हुंफट् कैलासवासिनि स्वाहा। ए(षां[19]?तां) वसुधारां नाम विद्यां यो जपति पथि तस्य लक्ष्मीर्विवर्धते। ओं नमो भगवत्यै वसुधारायै तद्यथा सरूपे भद्रवति मङ्गले अचले अचलपले उद्घाटनि उद्भेदाहाटनि सस्यधान्यधनवति श्रीमति प्रजावति अमले विमले रुँरु[20] स्वे[21] रूपेऽमले हन

---

१. 'त्र' ग. पाठः. २. 'न्ति' ख. पाठः. ३. 'लु म' ग. पाठः. ४. 'ला' ख., 'ले' ग. पाठः. ५. 'मु' क. ग पाठः. ६. 'ते भवरक्त' ग. पाठः. ७. 'मामपि वि', ८. 'र्गः', ९. 'वे' क. पाठः. १०. 'घो', ११. 'काकाळि' ग. पाठः. १२. 'त्रु' क. ग. पाठः. १३. 'ट निरेच' ग. पाठः. १४. 'ताए गुरु' क., 'त वा गुरु गुरु च' ग. पाठः. १५. 'रुषं म' ग. पाठः. १६. 'हाभा', १७. 'रुहा ई हु' क. पाठः. १८. 'हकारे' ख. पाठः. १९. 'षा' क. ख. पाठः. २०. 'कु' ग. पाठः. २१. 'स्वाहा रू' ख. पाठः.

